किमात्मनाऽनेन जहाति योऽन्ततः किं रिक्थहारैः स्वजनाख्यदस्युभिः ।
किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो व्ययः ॥ ९ ॥
इत्थं स निश्चित्य पितामहो महानगाधबोधो भवतः पादपद्मम् ।
ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्भीतः स्वपक्षक्षपणस्य सत्तम ॥ १० ॥
अथाहमप्यात्मरिपोस्तवान्तिकं दैवेन नीतः प्रसभं त्याजितश्रीः ।
इदं कृतान्तान्तिकवर्तिजीवितं ययाऽध्रुवं स्तब्धमतिर्न बुध्यते ॥ ११ ॥

श्रीशुक उवाच ।

तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः ।
आजगाम कुरुश्रेष्ठ ! राकापतिरिवोत्थितः ॥ १२ ॥
तमिन्द्रसेनः स्वपितामहं श्रिया विराजमानं नलिनायतेक्षणम् ।
प्रांशुं पिशङ्गाम्बरमञ्जनत्विषं प्रलम्बबाहुं सुभगं समैक्षत ॥ १३ ॥
तस्मै बलिर्वारुणपाशयन्त्रितः समर्हणं नोपजहार पूर्ववत् ।
ननाम मूर्ध्नाश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह ॥ १४ ॥
स तत्र हासीनमुदीक्ष्य सत्पतिं सुनन्दनन्दाद्यनुगैरुपासितम् ।
उपेत्य भूमौ शिरसा महामना ननाम मूर्ध्ना पुलकाश्रुविक्लवः ॥ १५ ॥

भाषा टीका ।

मेरे कहे हुए वचन को सत्यमानते होवै, तब मैं जिस प्रकार वंचना न हो तैसे सत्य करता हूं बस आप मेरे मस्तक पर अपना तीसरा पग रखकर माप लीजिये यहां पर यदि ऐसी शंका हो, परमात्मा सर्व चेतनों के हित परायण हैं बलि का सर्व स्वहर कर भी फिर उसको वरुण पाश मे क्यों बंधवाया ? तो उसका यह समाधन है, कि आपका बलि को अहंता ममता छुडाकर अपने परमैकांतिक भक्त बनाने का अभिप्राय है सो सर्वस्व लेकर ममतावलंबि कुछ न रहने दिया, परंच जब तक मैं बना हूं तब तक मेरा बहुतसा होसक्ता है इस लिये अहंतावलंबि पदार्थ जो मैं है सो भी जैसे अपना होजाय अर्थात् मैं और मेरा ये दोनों श्रीहरि के होजाय इसी से यह यत्न किया सो बलि के शरीर मापने की प्रार्थना करने पर सफल हुआ ॥ २ ॥

हे प्रभो ! मैं पद से भ्रष्ट होकर नरक से नहीं डरता हूं और न वरुण के फांस में बांधने से डरता हूं और न कोई बडे भारी व्यसन [ दुःख ] से डरता हूं और न धन के दुःख से न आपके दंड देने से जैसा, कि—अपकीर्त्ति से अत्यन्त डरता हूँ ॥ ३ ॥

हे पूज्यतम ! पुरुषों को दिये हुए दंड को मैं अच्छा मानता हूं, क्योंकि ? जो न माता न पिता न भ्राता और न सुहृद कोई भी नहीं देता है ॥ ४ ॥

आप हम असुर लोगों के परोक्ष होकर परम गुरु हैं जो आप अनेक मदों से अंध होने वाले हम लोगों को विवेक रूप चक्षु देते हो ॥ ५ ॥

जिस आपके विषै रूढ वैरानुबन्ध से बहुत से असुर लोग उस सिद्ध को प्राप्त हुए, कि—जिस सिद्धि को एकांत योगिजन प्राप्त होते हैं ॥ ६ ॥

तिन परम गुरु आपने मेरा निग्रह किया है और वरुण के पाशों से बांधा भी है पर इससे मेरे को न कुछ लज्जा और न कुछ व्यथा ॥ ७ ॥

हमारे पितामह प्रल्हादजी आपके भक्तों को संमत हैं जिनों ने बडा साधुवाद प्रकट किया, और आपके विपक्षी उनके पिता ने उनको बहुत ही पीडित किये परंच वह सदा आपही के परायण रहे ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अन्तत आयुषोऽन्ते रिक्थहारैः पुत्रैः इह गेहेषु केवलमायुषो व्यय एव नतु सुखं किञ्चित् ॥ ९ ॥

स प्रसिद्धो महान् स्वपक्षं दैत्यकुलं क्षपयतीति तथा तस्यापि ॥ १० ॥

प्रसभं बलात्त्याजिता श्रीर्यस्य यया श्रिया स्तब्धमतिः सन्

प्रह्लाद उवाच ।

त्वयैव दत्तं पदमैन्द्रमूर्जितं हृतं तदेवाद्य तथैव शोभनम् ।
मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात् ॥ १६ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

पुमानिदं जीवितमद्ध्रुवं न बुध्यते कथंभूतम् कृतान्तस्यान्तिकवर्ति मृत्योः सन्निहितम् ॥ ११ ॥

राकापतिः पूर्णेन्दुः ॥ १२ ॥

अञ्जनत्विषं श्यामम् ॥ १३ ॥

स्वकृताहङ्कारादिरूपापराधस्मरणेन सव्रीडं नीचीनमधोमुखं यस्य सः ॥ १४ ॥

शिरसा नमन्नेवोपेत्य मूर्ध्ना ननाम बलेस्तत्कृतमनुग्रहं दृष्ट्वा पुलकैरश्रुभिश्च विक्लवो विह्वलः ॥ १५ ॥

त्वयैवेति नह्यैन्द्रं पदमेतदीयं त्वयापहृतं किन्तु स्वीयमेव पुनः स्वीकृतं तच्च शोभनमेव कृतं नत्र हृतः, मन्य इति. यद्यस्माच्छ्रियैव यदात्ममोहनं तस्माद्विभ्रंशितः ॥ १६ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

मरणशीलस्य पुंसः आत्मादिभिर्देहादिभिः किम् ? न किमपि न कोपि पुरुषार्थः । किन्तु केवलमायुषो व्यय एवेति निश्चितवानिति शेषः अन्यथा पुनः पितामह इत्यस्यानन्वयापत्तेः यः अन्ततो जहाति देहिनं तेनानेनाऽऽत्मना देहेन किमित्यन्वयः । रिक्थहारैर्दायादैः स्वजन इत्याख्या व्यवहारो येषान्तैर्दस्युभिर्दस्युतुल्यैः स्वजनैरित्यर्थः । संसृतिहेतुभूतया भार्यया किम् ? ॥ ९ ॥

सोऽस्मत्पितामहो महान् सद्गुणाश्रयोऽगाधबोधः अपरिमितज्ञानसम्पन्नः सत्तमो भागवतश्रेष्ठः प्रह्लादः संसारिजनसङ्गाद्भीतः सन् स्वपक्षं दैत्यकुलं क्षपयतीति तथा तस्यापि भवतः नास्ति कुतोपि भयं यस्मात्तत्पादपद्मं ध्रुवं नित्यपुरुषार्थरूपं प्रपेदे शरणं जगाम ॥ १० ॥

तथा अहमपि दैवात्प्रसभं बलाद्यथाजिता श्रीर्यस्य तादृशः आत्मनो मम रिपोस्तवान्तिकं समीपं नीतस्त्वत्पादपद्मं प्रपद्य इति शेषः । श्रियं विशिनष्टि, यया श्रिया स्तब्धमतिरपहृतज्ञानः पुमान् कृतान्तस्य मृत्योः सन्निधानवत्त्वपीदं जीवितमध्रुवमस्थिरं न बुध्यते न मन्यते ॥ ११ ॥

तस्य बलेरित्थं भाषमाणस्य सतः हे कुरुश्रेष्ठ ! उदितो राकापतिश्चन्द्र इव प्रकाशमानो भगवत्प्रियः प्रह्लादस्तत्राजगाम ॥ १२ ॥

तथागतं स्वपितामहं प्रह्लादम् इन्द्रसेनो बलिः समपश्यत् कथम्भूतम् ? श्रिया कान्त्या विराजमानं कमलवदायते ईक्षणे यस्य प्रांशुं निर्मलमञ्जनत्विषं श्यामलं प्रलम्बावाजानुलम्बौ बाहू यस्य तं सुभगं सुन्दरम् ॥ १३ ॥

तस्मै प्रह्लादाय पूर्ववदर्घ्यादिपूर्वकमर्हणां न चक्रे तत्र हेतुः वारुणैः पाशैर्यन्त्रितः बद्धः किन्तु केवलं मूर्ध्ना ननाम नमस्कृतवान् ततोऽश्रुभिर्विलोले लोचने यस्य सः सव्रीडं नीचीनमधःकृतं मुखं तस्य तादृशो बभूव ॥ १४ ॥

ततः स महामनाः प्रह्लादः सतां भागवतानां पतिं सुनन्दनन्दादिभिः पार्षदैस्सेव्यमानं तत्रोपविष्टं हरिं वामनं निरीक्ष्य पुलकैरश्रुभिश्च विक्लवो विह्वलस्सन् उपेत्य शिरसा भूमौ नमस्कृतवान् उवाचेति शेषः ॥ १५ ॥

तदेवाह–त्वयैवेति द्वाभ्याम् । ऐन्द्रं पदं त्वयैवास्मै दत्तं, कुतः ? यतस्त्वं तत्प्राप्तिसाधनेन विश्वजिता यागेनार्चितः आराधितः यद्दत्तं तदिदानीमपहृतं तच्च शोभनमेव कृतं, शोभनत्वमेव व्यनक्ति–मन्य इति । यद्यस्मात् श्रीरेवात्ममोहनं तस्मादयं विभ्रंशितः इति यत्सोऽयमस्य महाननुग्रह एवं त्वया कृत इति मन्ये अन्यथाऽयं श्रीमदात्स्वपरयाथात्म्यज्ञानरहितो विनश्येदिति भावः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

श्रीप्रह्लादः कथं चर्यया अतिप्रियदेहादिकमुत्सृज्य श्रीहरिचरणैकशरणमापेति तत्राह–किमिति । यो येनात्मना देहेन मुदं जहाति तद्वियोगलक्षणमरणेनेति शेषः । तस्य पुंसः तेन देहेन किम् ? न किमपि प्रयोजनमित्यर्थः । रिक्थहारैः पितृधनस्वीकारयोग्यैरेभिरायुषो व्ययो नाश इति यत्तस्माद्दुर्जनसङ्गाद्भीतः स्वपक्षोऽसुरजनः तस्य नाशकस्य ॥ ९–१० ॥

ममाप्ययमेव निश्चय इति भावेनाह–अथेति । असुरजातित्वान्मम शत्रुभूतस्य त्वया त्याजितराज्यश्रीः मुमुक्षुणेयं श्रीर्बलादपि त्याज्या अन्यथा अनर्थ योग एवेति भावेनाह–इदमिति । यया श्रिया स्तब्धमतिः कृतान्तान्तिकवर्तीदं जीवितं न जानातीत्यन्वयः ॥ ११ ॥

शुकः प्रह्लादस्य भक्त्यतिशयं दर्शयितुं बलेः स्तवनेन भगवद्भक्तिविशेषमाज्ञायागमनमिति तदागमनमाह–शुक इति ॥ १२ ॥

प्रांशुमुन्नतम् ॥ १३ ॥

सव्रीडत्वेन नीचीनमर्वाचीनं मुखं यस्य स तथा ॥ १४–१५ ॥

आत्मनो मोहहेतुभूतया श्रिया विभ्रंशितो विगलित इति यदयं महानुग्रहोऽस्यकृत इति मन्ये तत्तस्मात्कः पुमानात्मनो गतिं यथावदभिचष्टे न कोपि यथात्मनः स्वस्य गतिं सर्वज्ञस्वातन्त्र्यलक्षणामभिचष्टे तथा कः परमात्मनो गतिं स्थितिं स्वातन्त्र्यलक्षणाम् पश्यति श्रीमदान्धत्वान्न पश्यतीति वा ॥ १६–१९ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

जनात् दैत्यादिदुर्जनसङ्गाद्भीतः आत्मरिपोः आत्मरिपुत्वेन भ्रान्त्या प्रतीयमानस्यापीत्यर्थः । दैवेन श्रीप्रह्लादपौत्रत्वप्रापकत्वेन भाग्येन ॥ १०—१३ ॥

सव्रीडेति मद्दर्शने सति तदज्ञातस्यापि निजकुवृत्तस्य मनसि सङ्कोचावहत्वात् ॥ १४ ॥

स तत्र दासीनमिति वामनरूपेण पुनरवशिष्टतत्सङ्कल्पप्राप्तये न्याये प्रवृत्तत्वात् ॥ १५ ॥

त्वयैवेति यद्यस्मान्महानुग्रहादात्मना सुभगरूपगुणयुक्तेन स्वेन यन्मोहनं वशीकारः तस्मादेव हेतोः श्रियो विस्रंशितः नतु बलात् नच दोषमयश्रीनिर्हरणपूर्वकमेवात्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

ननु, सोपि पितरमनपेक्ष्य किमिति मां प्रपेदे, तत्राह—किमिति, द्वाभ्याम् । आत्मनां देहेन रिक्थं त्वत्सेवार्थकमपि भनं हरन्तीति तैः ॥ ९ ॥

स्वपक्षं दैत्यकुलं क्षपयतीति तस्य ॥ १० ॥

आत्मरिपोरिति व्याजस्तुत्यैवोक्तिर्वस्तुतस्तु आत्मनः परमप्रियसुहृदः यद्वा आत्मनस्स्थूलसूक्ष्मदेहद्वयस्य रिपोर्नाशकस्य मोक्षप्रदस्येत्यर्थः । यद्वा आत्मनो मदहङ्कारस्य शत्रोस्त्वयाद्य मम त्रिभुवनाधीशत्वाहङ्कारमहारोगः सार्धं नाशित इत्यर्थः । दैवेन प्रह्लादपौत्रत्वप्रापकेन भाग्येन यया श्रिया व्यसनबुद्धिरयं मल्लक्षणो जनः इदं जीवितम् अदृध्रुवं न बुध्यत इत्यतो धन्वन्तरिमिव मत्सर्वरोगचिकित्सकं त्वामहं भाग्येन प्राप्त इति भावः ॥ ११—१२ ॥

सुभगर्षभं सर्वलोकप्रियम् ॥ १३ ॥

अपराधं विना कथं बन्धनमित्यपराधलक्षणस्य बन्धनस्य प्रह्लाददृष्टत्वात् सव्रीडं यद्वा प्रह्लादात्सदैव शिक्षितस्य निरभिमानत्वलक्षणस्य धर्मस्य भूमिदानप्रस्तावे सहसा विस्मरणात् तद्दर्शने सति सव्रीडं सव्रीडत्वादेव नीचीनं मुखं यस्य सः ॥ १४—१५ ॥

त्वयैवेति न हीन्द्रं पदमेतदीयं त्वया हृतं किन्तु स्वीयमेव पुनः स्वीकृतं तच्च शोभनमेव कृतं यतः संयतोपि जनस्तत् तस्यां सम्पदि सत्यां क आत्मनो गतिः तत्त्वं यथावद्विचष्टे न कोपीत्यर्थः । न चात्र तव दत्तापहारलक्षणो दोषोपि स्नेहेन पुत्रहस्ते दत्तस्यापि मोदकादेरहिताशङ्कया पुनराच्छिद्य नीतवतः पितुर्यथा तथेत्यर्थः ॥ ॥ १६—१७ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

आत्मना देहेन रिक्थहारैर्दायादैः इह गेहेषु आयुषो व्यय एव नतु सत् ॥ ९ ॥

स्वपक्षं दैत्यकुलं क्षपयतीति तथा तस्य प्रपेदे शरणम् गतः ॥ १० ॥

अथाहमपि आत्मनामसुराणां रिपोस्तवान्तिकं दैवेन नीतः अर्थात्त्वां शरणं गतोस्मि, कथम्भूतः ? असमं बलात्त्याजिता, श्रीर्येन सः यया श्रिया मत्तः व्यर्थमतिर्जनः कृतान्तस्य मृत्योरन्तिकवर्त्ति निकटगम् एवम्भूतमध्रुवं जीवितं न बुध्यते ॥ ११ ॥

राकापतिः पूर्णचन्द्रः ॥ १२ ॥ १३ ॥

सव्रीडं नीचीनं नतं च मुखं यस्य सः ॥ १४ ॥

पुलकैरश्रुभिश्च विह्वलः ॥ १५ ॥

यत् यस्मात् श्रियः सम्पदः आत्ममोहनात् अहमेवेन्द्रपदविजेतृत्वादिगुणवान् इत्यहङ्काराच्च ॥ १६ ॥

भाषा टीका ।

इस शरीर से कौनसा प्रयोजन है जो अंत में छोड़ही जायगा, ऐसे ही जिसका बटाने वाले स्वजन नाम वाले इन चोरों से क्या प्रयोजन है, और संसार की हेतु रूप जाया से भी कौन काम है, और जब एक दिन मरने ही वाला है यह तब इसको गृहों से क्या प्रयोजन है क्यों कि ! जिन गृहों में लगकर व्यर्थ ही आयु चली जाती है ॥ ९ ॥

इस प्रकार अगाध बोध हमारे पितामह प्रल्हादजी ने जनों से भगकर निर्भय और ध्रुव ऐसे आपके चरणारविन्दों की शरण ली यद्यपि आप दैत्य कुल के नाशक रहे तो भी और की शरण नहीं ली ॥ १० ॥

अब इसी प्रकार अपने वैरी ऐसे आपके समीप में आ पहुंचा हूं और बलात्कार से मेरी संपत् भी दूर करदीनी है जिस संपत् के कारण पुरुष जड़ मति होकर सदा संनिहित मृत्यु को नहीं जानता है ॥ ११ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे कुरु श्रेष्ठ ! राजा बलि जब तक ऐसे बोलते रहे तब तक जैसे चन्द्र का उदय भया हो इस प्रकार भगवत्प्रिय प्रह्लाद आये ॥ १२ ॥

वैष्णव श्री से देदीप्यमान कमल सदृश लोचन वाले, और बडे उन्नत तथा अञ्जन सदृश कांति वाले, दीर्घ बाहु और परम सुभग ऐसे अपने पिता मह प्रल्हाद को बलिने देखा ॥ १३ ॥

उन प्रल्हादजी को वरुण के पाशों से बंधे हुए बलि ने पूर्व वत् सत्कार नहीं कर पाया किंतु मस्तक से नमस्कार मात्र किया और नेत्रों में अश्रुपात भर आये और लज्जा से नीचे को मुखकर लिया ॥ १४ ॥

प्रल्हादजी ने नन्द सुनन्द आदिक पार्षदों से उपासित अपने पति को देखा और समीप जाकर आनन्दाश्रुओं से विह्वल और और पुलकित होकर भूमि में मस्तक से प्रणाम किया ॥ १५ ॥

प्रह्लाद उवाच

प्रह्लादजी बोले, कि—हे प्रभो आपने ही इसको यह दीप्त समृद्ध पद दिया और उसको फिर आपने लेलिया यह बहुत ही अच्छा भया, और मैं तो यह जानता हूं कि—जो अपने को मोह करने वाली से आपने इसका वियोग किया यह परम अनुग्रह किया है ॥ १६ ॥

यथा हि विद्वानपि मुह्यते यतस्तत्को विचष्टे गतिमात्मनो यथा ।
तस्मै नमस्ते जगदीश्वराय वै नारायणायाऽखिललोकसाक्षिणे ॥ १७ ॥

श्रीशुक उवाच ।

तस्याऽनुशृण्वतो राजन् ! प्रह्लादस्य कृताञ्जलेः ।
हिरण्यगर्भो भगवानुवाच मधुसूदनम् ॥ १८ ॥
बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला ।
प्राञ्जलिः प्रणतोपेन्द्रं बभाषेऽवाङ्मुखी नृप ! ॥ १९ ॥

विन्ध्यावलिरुवाच ।

क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश ! कुर्युः ।
कर्तुः प्रभोस्तव किमस्यत आवहन्ति त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥ २० ॥

ब्रह्मोवाच ।

भूतभावन ! भूतेश ! देवदेव ! जगन्मय ! ।
मुञ्चैनं हृतसर्वस्वं नायमर्हति निग्रहम् ॥ २१ ॥
कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये ।
निवेदितं च सर्वस्वमात्माऽविक्लवया धिया ॥ २२ ॥

यत्पादयोरशठधीः सलिलं प्रदाय दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम् ।
अप्युत्तमां गतिमसौ भजते त्रिलोकीं दाश्वानविक्लवमनाः कथमार्तिमृच्छेत् ॥ २३ ॥

श्रीभगवानुवाच ।

ब्रह्मन् ! यमनुगृह्णामि तद्विशो विधुनोम्यहम् ।
यन्मदः पुरुषः स्तब्धो लोकं मां चाऽवमन्यते ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मोहनत्वमेवाह—यया धिया विद्वानपि यतः संयतोऽपि मुह्यति सततस्यां सत्यां कोऽन्यः पुमानात्मनो गतिं तत्त्वं यथावद्विचष्टे पश्यति तस्मै महाकारुणिकाय ॥ १७ ॥

तस्य प्रह्लादस्याऽनुशृण्वत उवाचेति किञ्चिद्वक्तुं प्रवृत्त इत्यर्थः ॥ १८ ॥

तदैव विन्ध्यावलिरपि वक्तुं प्रवृत्ता । तां च संमानयन् हिरण्यगर्भः क्षणं तूष्णीं स्थितोऽतस्तस्या एव वाक्यं प्रथममवतारयति, बद्धं वीक्ष्येति ॥ १९ ॥

त्रिजगतः कर्तुः प्रभोः पालकस्याऽस्यतः संहर्तुश्चेश्वरस्य तवाऽन्ये किमावहन्ति किं समर्पयन्ति त्वयाऽवरोपितः कर्तृवादः कर्तारः स्वतन्त्रा वयमिति वादमात्रमपि येषां ते । अयं भावः लोकत्रयं मयाऽर्पितं तृतीयपादाय देहं समर्प्य प्रतिश्रुतमृतं करोमीति देहादिषु स्वाम्याविष्कारेण त्रुवन्नयं कुबुद्धिर्निर्लज्जश्च यतस्त्वमेव सर्वस्यापि स्वाम्यतो मन्दबुद्धिमेनं केवलं कृपया विमुच्य पालयेति ॥२०॥

तदेवं प्रह्लादस्य विन्ध्यावल्याश्च परमार्थोक्त्या प्रसन्नो हरिः ब्रह्मा तु लोकदृष्ट्यैव विज्ञापयति भूतभावनेति त्रिभिः ॥ २१ ॥

निग्रहानर्हत्वे हेतुः कृत्स्नेति सर्वस्वमेवाह—आत्मेति ॥२२॥

तदेव कैमुत्यन्यायेनाह—यस्य तव पादयोः सलिलमात्रमपि प्रदाय सर्वोऽपि जन उत्तमां गतिं प्राप्नोति. तस्मै तुभ्यमसौ बलिस्त्रिलोकीं दाश्वान्दत्तवान् स आर्तिं कथं प्राप्नुयात्२३

तस्य विशोऽर्थान् मन्दर्थापहारः कोऽयमनुग्रहस्तत्राह, यन्मदः यैरर्थैर्मदो यस्य सः अत एव स्तब्धोऽनम्रः सन् मदस्तम्भहेतूनामर्थानामपहार एवानुग्रह इत्यर्थः ॥ २४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

किञ्च यया श्रिया विद्वानपि यतः सम्यतोपि मुह्येत् ततस्तस्यां सत्यां कः पुमान् आत्मनो गतिं स्वरूपं यथावद्विचष्टे पश्यति ? कथमिति शेषः । कथंचिचष्टे न कथञ्चिदपि पश्यतीत्यर्थः । तस्मै महोपकर्त्रे जगतामीश्वराय सर्वज्ञाय नारायणाय तुभ्यं नमः केवलं नमस्कर्तुं शक्नुमः नत्वेवं कुर्वेवं न कुर्विति विधातुं शक्नुम इति भावः ॥ १७ ॥

प्रह्लादस्याभिप्रेतमाविष्कर्तुं हिरण्यगर्भस्तमुवाचेत्याह मुनिः तस्येति । बद्धाञ्जलेः प्रह्लादस्य शृण्वतस्ततो भगवान्हिरण्यगर्भो मधुसूदनमुवाच किञ्चिद्वक्तुमुद्यत इत्यर्थः । तथैव विन्ध्यावलिरपि किञ्चिद्विज्ञापयितुं प्रवृत्ता तां च सम्मानयन्ब्रह्मा हिरण्यगर्भः पत्नीं तूष्णीमवस्थितोऽनन्तस्त्वया एव वचः प्रथममवतारयति बद्धमिति श्लोकः स्पष्टार्थः ॥१८—१९ ॥

तदेवाह—क्रीडार्थमिति । ते त्वया स्वस्य क्रीडार्थमिदं कृत्स्नं जगत्कृतं सृष्टं तत्र तस्मिन् स्वक्रीडोपकरणभूते त्वत्सृष्टे जगत्यपरे केचित्कुबुद्धयः स्वाम्यन्तु तत्र स्वत्वबुद्धिं कुर्युः अस्य स्वत्वबुद्धिं कुर्वन्तः अत एव त्यक्ता ह्रीर्लज्जा यैस्ते अन्तरात्मना त्वया अवरोपिता आरोपिताः कर्तृवादा वयं स्वतन्त्रा इति वादा येषां ते वादमात्रेणापि स्वस्वामित्वरहिता इत्यर्थः । एवंविधाश्चेत् कर्तुः स्रष्टुः प्रभोः पालकस्य अस्यतः संहर्तुश्च तव किमावहन्ति किं समर्पयन्ति किञ्चित्स्वमस्ति चेत्समर्पयेयुः तदभावात् किं समर्पयन्तीति भावः । कां हानिं कुर्वन्ति? न तव कदाचिदपि हानिरपीति वार्थः । अयमभावः लोकत्रयं मयार्पितं तृतीयपादाय देहं समर्प्य प्रतिश्रुतमृतं करोमीति देहादिषु स्वाम्याविष्कारेण भुवनत्रयं कुबुद्धिर्निर्लज्जश्च. त्वमेव सर्वस्य स्वाम्यतो मन्दबुद्धिमेनं विमुच्य पालयेति, अयमेव प्रह्लादस्याऽप्यभिप्रायः ॥ २० ॥

इममेवाभिप्रायमाविष्कर्तुं सम्बोधयन् स्पष्टमाह, ब्रह्मा—भूतभावनेति । हे भूतभावन ! भूतस्रष्टः ! भूतेश ! भूतान्तरात्मन् ! अन्तरात्मतया पालकेत्यर्थः । हे देवदेव ! देवानां । जगत्स्रष्टॄणां रुद्रादीनामपि देव ! जगच्छरीरक ! हृतं सर्वस्वं यस्मात्तमेनं बलिं मुञ्चायं निग्रहं प्राप्तुं नार्हति ॥२१॥

निग्रहानर्हत्वमेवाह—कृत्स्नेति । कृत्स्नाभूमिर्वै च कर्मणा संपादिता इन्द्रादिलोकाश्च चेत्येतत्सर्वस्वं तथाऽविकलतया अदीनया बुद्ध्याऽऽत्मा देहश्च अनेन बलिना ते तुभ्यं दत्ताः अतोऽयमनिग्राह्य इति भावः ॥ २२ ॥

एतदेव कैमुत्यन्यायेनाह—यत्पादयोरिति । अशठधीरमुखंधीर्यस्य तव पादयोः सलिलं विधायाऽर्घ्यजलं समर्प्य दूर्वाङ्कुरैरपि पूजां विधायोत्तमां गतिमपि भजते प्राप्नोति अयं तु बलिरविक्लवमनाः स्थिरचित्तः सन् त्रिलोकीं दाश्वान् दत्तवानतः कथमयमाधिं प्राप्नुयात् ? तस्मादेनं विमुञ्चेत्यर्थः ॥ २३ ॥

एवं विज्ञापितो भगवानिममनुग्रहीतुमेवेत्थं मया कृतमित्याह, यावदध्यायसमाप्ति ब्रह्मन्निति । हे ब्रह्मन् ! अहं तावद्यमनुग्रहीतुमिच्छामि तस्य विशोऽर्थान् विधुनोमपहरामि तावदनर्थहेत्वपहार एव प्रथमो मदनुग्रह इत्यर्थः । अर्थस्यानर्थहेतुत्वमाह—यन्मदः यस्य धनस्य सम्बन्धी मदो यस्य तादृशः अत एव स्तब्धो विवेकरहितः जनः पुरुषो लोकं मदत्वात्मरूपं जगत् मां तदन्तर्वर्तिनं मां चावमन्यते तिरस्करोतीत्यर्थः ॥ २४ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

स्वमतृगर्वोद्रेकं कटाक्षीकृत्य भगवन्तं समीडे क्रीडार्थमिति ते त्वयेदं त्रिजगदात्मनः क्रीडार्थं कृतमिति सङ्गिरन्ते केचित् "क्रीडार्थं सृष्टिरित्येके" इतिश्रुतेः । हे ईश ! तत्रापरे कुधियोऽसुरप्रकृतयः आत्मनः स्वाम्यं कुर्युः वयमस्य स्वामिन इति जल्पन्ति जल्पं कुर्वन्ति. तत्रापि तुशब्दो महाविशेषं प्रकाशयति तेन तव स्वाम्यस्य न कामपि हानिमापादयन्ति इत्याह—कर्तुरिति, त्वयाऽवरोपितो विचालितोऽहङ्कृतिरिति विवादो येषां ते तथा अत एव त्यक्तलज्जास्ते कुधियोऽस्य जगतः कर्तुः प्रभोरधिपतेस्तव किमावहन्ति न किमपि हानिं कुर्वन्तीत्यर्थः । समर्थेऽधिपतौ प्रभुरिति च ॥२०—२२ ॥

बन्धनादिकमासुरजन्मदोषापहरणाय त्वया कृतं न तु द्वेषादन्यथा तव वैषम्यनैर्घृण्ये स्यातां न तद्युक्तमित्याशयेनाह—यत्पादयोरिति । न विक्लवमनाः सर्वस्वदानादप्यहीनमनाः ॥ २३ ॥

यद्यपि ब्रह्मा भगवदभिप्रायं वेत्ति तथापीतरेषां तज्ज्ञापनाय स्वाभिप्रायं वक्ति—ब्रह्मन्निति । ब्रह्मन् प्रजापते ! यन्मदः यद्वित्तनिमित्तमदः ॥ २४ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

आत्मीयत्वेन श्रीप्रह्लादविन्ध्यावल्यौ तावत्तदवज्ञागर्भमेव निवेदितवत्यौ श्रीब्रह्मा तु तद्भक्तपक्षपातेन बलिपक्षमेव गृहीत्वा सविनोदं निवेदयति, भूतेति ॥ २१—२५ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

उवाचेति किञ्चिद्वक्तुं प्रवृत्त इत्यर्थः ॥ १८ ॥

तथैव विन्ध्यावलिरपि वक्तुं प्रवृत्ता तां च सम्मानयन् हिरण्यगर्भः क्षणं तूष्णीं स्थितः अतस्तया एव वाक्यमवतारयति, बद्धं वीक्ष्येति । भयविह्वला भगवत्पराक्रमभयव्यग्रा अवाङ्मुखी श्रीस्वभावाप्रीचीनवदना ॥ १९ ॥

ते त्वया कुधियो बलिप्रभृतयः कर्तुः स्रष्टुः प्रभोः पालयितुः अस्यतः संहर्तुश्च तवेति चतुर्थ्यर्थे षष्ठ्यर्थः एवंभूताय तुभ्यं किं वस्तु आवहन्ति ददाति अहन्तास्पदममतास्पदवस्तूनां मध्ये कस्मिन् वस्तुनि स्वाम्यं वर्तते यत् तृतीयपादाय प्रतिश्रुतमृतं करोमीत्युक्त्वा स्वदेहं दातुमिच्छन्ति त्यक्तह्रियः त्रिभुवनस्य देहस्य च त्वत्सृष्टत्वात्त्वदीयमेवेदं सर्वं तुभ्यं दत्वा स्वकीर्तिं चिकीर्षवो लज्जामपि किं त्यक्तवन्त इत्यर्थः । अत एते महोन्मादरोगग्रस्तास्त्वया सद्वैद्येन कृपया साधुचिकित्सिता इत्याह—अवरोपितः अहङ्कारो इत्यपि सहसैवावरोहितः त्रिभुवनपालनकर्तारो वयमिति मिथ्या-

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

ऽहंकारमूलकः कर्तृवादो येषां ते तस्मादपराधिनोऽस्य बन्धनमुचितमेवेति भावः ॥ २० ॥

तदेवं प्रह्लादस्य विन्ध्यावलेश्च परमार्थीकृत्य प्रस्तावितमेव भगवन्तं ब्रह्मा लोकतत्त्वदृष्ट्या प्रसादयति, भूतेति ॥ २१ ॥

ते तुभ्यम् आत्मा स्वदेहश्च निवेदितः ॥ २२ ॥

निग्रहात्तर्हत्वं कैमुत्येनाह-यदिति । असौ सर्वोऽपि जनः उत्तमां गतिं वैकुण्ठप्राप्तिं भजति बलिस्तु त्रिलोकीं दाश्वान् दत्तवान् कथमार्त्तिम् प्राप्नुयात् ॥ २३ ॥

तस्यविशोधनानि ननु, धनापहारः कोऽयमनुग्रहस्तत्राह- यन्मदः यैर्यैरेव मदो यस्य सः ॥ २४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यया श्रिया यतो येनाहङ्कारेण च विद्वानपि मुह्यते तत् तयोः सतोः यथा यथावदात्मनो गतिं को विचष्टे पश्यति न कोऽपीत्यर्थः । सम्पदहङ्कारौ उपास्योपासकस्वरूपज्ञानविरोधिताविति भावः ॥ १७ ॥

हिरण्यगर्भो ब्रह्मा उवाच ॥ १८ ॥

ततोऽपि पूर्वं तत्पत्नी बलिभार्या बभाषे ॥ १९ ॥

ते त्वया आत्मनः क्रीडार्थम् इदं त्रिजगत् त्रिगुणात्मकं जगत् कृतं तत्र स्वाम्यं स्वामिभावं ममेदमिति मतिं कुधियः कुर्युः तत्र हेतुः त्वदवरोपितः कर्तृवादो येषां ते तथा त्वत्प्रवर्तितमायया देहेन्द्रियादिभूतया स्वातन्त्र्येण वयमेव कर्तार इति वादो येषां ते त्वन्मायया मोहिता इत्यर्थः । अत एव अकाह्रियः ते तथाभूताः जगतः कर्तुः प्रभोः रक्षतुः अत्यतः संहर्तुः किमावहन्ति किं समर्पयन्ति न किमपीत्यर्थः । त्वयैव दत्तमित्याद्यर्थेणोक्तं सत्यमेवेति ॥ २० ॥ २१ ॥

अनेन ते कृत्स्ना भूः दत्ता कर्मजिता लोकाः दत्ताः पदं सर्वस्वं निवेदितं पदे तृतीयं कुरु शीर्ष्णि मे निजमिति वदता आत्मा च निवेदितः ॥ २२ ॥

यस्य तव पादयोः सलिलमात्रमपि प्रदाय दूर्वाङ्कुरैरपि सपर्यां विधाय जनः उत्तमां गतिं भजते प्राप्नोति असौ बलिः तस्मै तुभ्यं त्रिलोकीं दाश्वान् दत्तवानतीयं कथमार्त्तिम् ऋच्छेत् प्राप्नुयात् ॥ २३ ॥

विधः अर्थात् विधुनोमि अपहरामि ॥ २४—२६ ॥

---

भाषा टीका ।

जिस संपत के वश होकर विद्वान् भी मोह को प्राप्त होता है उस संपत के रहने पर कौन ऐसा पुरुष है जो अपने आत्मतत्त्व का विचार करसके उस परमश्रेय के प्रतिबंधकरूप संपत् के विध्वंस करने वाले परम कारुणिक जगत् के ईश अखिललोक के साक्षि ऐसे आप नारायण को नमस्कार हो ॥ १७ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे राजन् ! इतने में कृताञ्जलि प्रह्लाद के सुनते २ बडे ज्ञानवान् ब्रह्माजी ने श्रीमधुसूदन देव से बोलने की इच्छा करी ॥ १८ ॥

हे नृप ! इतने में अपने पति को बंधे हुए देखकर अति भय भीत बलि की पत्नी हाथ जोडकर नीचे को मुखकर प्रणत होकर उपेन्द्र [ श्रीहरि ] से बोली ॥ १९ ॥

विन्ध्यवलिरुवाच ॥

विन्ध्या बलिजी बोली, कि—हे ईश ! इस जगत् को आपने अपने क्रीडा के निमित्त किया है और उस जगत में शरीरादिक यावत्पदार्थ आपके रचे हैं परंच उस शरीरादिक के और भुवन के कुबुद्धि जन अपने आपही स्वामी बन जाते हैं । जगत् के उत्पत्ति कर्त्ता, पालन कर्त्ता और संहार कर्त्ता तो आप हैं आपने उनके ऊपर स्वामी पने का आरोपण कर दिया है, वे फिर आप ही स्वामी बन बैठे, । जब सब पदार्थ आपही का है तब वे निर्लज्ज लाग आपको क्या समर्पण करते हैं सो मैं नहीं जानती हूं । अर्थात् मेरे पति को यह अभिमान है कि—तीनो लोक मैंने समर्पण किये अब तीसरे पग में मैं अपने शरीर को समर्पण करके प्रतिज्ञा को सत्य करता हूं सो देह गेहादिक पहिले ही आपका है फिर ये समर्पण करने वाला कौन है तस्मात् मेरा पति निर्बुद्धि और निर्लज्ज है इसको आप अपनी निर्हेतुक केवल कृपा से छुडा कर पालन करो ॥ २० ॥

ब्रह्मोवाच ॥

ब्रह्माजी बोले, कि—हे भूत भावन ! हे भूतेश ! हे देवदेव ! हे जगत्पते ! इसका सर्वस्व हरा गया अब इसको छोड दीजिये यह दंड देने योग्य नहीं है ॥ २१ ॥

हे प्रभो ! इसने समग्र भूमि आपको दीनी, और कर्म से जीते हुए सब लोक दिये, और स्थिर बुद्धि से सर्वस्व आपको निवेदन किया ॥ २२ ॥

जिसके चरणों में सौम्य होकर जल मात्र देकर, और दूर्वा के अंकुर मात्र से पूजा कर कर पुरुष उत्तम गति को प्राप्त होता है फिर इसने तो स्थिर मन से आपको त्रिलोकी समर्पण करी है यह कैसे दुःख पासका है ॥ २३ ॥

श्रीभवान उवाच ॥

श्रीभगवान् बोले, कि ब्रह्मन् हम जिस पर अनुग्रह करते हैं उसका धन हर लेते हैं, जिसके मदसे मत्त होकर पुरुष सब लोक का और मेरा अव मान करता है ॥ २४ ॥

---

श्रीभगवानुवाच ।

यदा कदाचिज्जीवात्मा संसरन्निजकर्मभिः ।
नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥ २५ ॥
जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ।
यद्यस्य न भवेत्स्तम्भस्तत्रायं मदनुग्रहः ॥ २६ ॥
मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः ।
सर्वश्रेयः प्रतीपानां हन्त मुह्येन्न मत्परः ॥ २७ ॥
एष दानवदैत्यानामग्रणीः कीर्त्तिवर्धनः ।
अजैषीदजयां मायां सीदन्नपि न मुह्यति ॥ २८ ॥
क्षीणरिक्थश्च्युतः स्थानात्क्षिप्तो बद्धश्च शत्रुभिः ।
ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः ॥ २९ ॥
गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः ।
छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ॥ ३० ॥
एष मे प्रापितः स्थानं दुष्प्रापममरैरपि ।
सावर्णेरन्तरस्यायं भवितेन्द्रो मदाश्रयः ॥ ३१ ॥
तावत्सुतलमध्यास्तां विश्वकर्मविनिर्मितम् ।
यन्नाधयो व्याधयश्च क्लमस्तन्द्रा पराभवः ।
नोपसर्गा निवसतां सम्भवन्ति ममेक्षया ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दुर्लभं पुरुषजन्म कथंचिल्लब्धवतो जीवस्य जन्मादिनिमित्तो गर्वो महाहानिकरस्तस्य च नाशो मदनुग्रहादेवेत्याह—यदेति द्वाभ्याम् । अनीशः परतन्त्रः सन्निजैः कर्मभिर्नानायोनिषु कृमिकीटकादिषु संसरन् ॥ २५ ॥

तत्र पौरुष्यां गतौ जन्मादिभिरपि यस्य यदि स्तम्भो न भवेत्तर्ह्ययं मदनुग्रह एव ॥ २६ ॥

कथं तर्हि ध्रुवादिभ्योऽर्थसम्पदो ददासीति चेत्तत्राह—मान एव स्तम्भो नम्रता तस्य निमित्तभूतानां समन्ततः सर्वशः सर्वश्रेयः प्रतिकूलानां जन्मादीनां सत्त्वेऽपि जन्मादिभिरिति वा हन्तेति खेदे हे ब्रह्मन् । मत्परो न मुह्येदतो भक्तस्येच्छया सम्पदोऽपि ददामि अभक्तस्तु मुह्येदिति तदपहाररूपमेव तस्यानुग्रहं करोमीति भावः ॥ २७ ॥

अस्य चेदानीं मत्परत्वादन्यैर्दुष्प्रापमपि दास्यामीति वक्तुं तस्य मोहाभावमाह—एष इति त्रिभिः ॥ २८ ॥ २९ ॥

"न ह्येतस्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमान्" इत्यादिना छलैरेव मया धर्म उक्तस्तथापि तं धर्ममयं न त्यजत्यतः सत्यवाक् ॥ ३० ॥

मे मया अहमेवाश्रयः पालको यस्य सः ॥ ३१ ॥

स्थानं प्रापित इति यदुक्तं तदेव स्थानमाह—तावत्सावर्णिमन्वन्तरपर्यन्तं सुतलमध्यास्तामधिवसत्वित्यर्थः । यत्रास्मिन्वसतामाध्यादयो ममेक्षया न सम्भवन्ति ॥ ३२ ॥

———

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमवमानेनान्यैश्च कर्मभिरिह लोके नानायोनिषु संसरन् तिर्यक्स्थावरादिषु जन्म प्राप्नुवन्नयं जीवात्मा कर्मवश्यः यदा कदाचित् याद‍ृच्छिकसुकृतविशेषात्पौरुषीं गतिं पुरुषजन्म प्राप्नुयात् ॥ २५ ॥

तत्रापि जन्मादिभिर्यस्य पुरुषस्य स्तम्भो मदः अनम्रता वा न भवेत्तत्र तद्विषये अयं स्तम्भाभाव एव मदनुग्रहो ज्ञेयः । तत्र जन्म-

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

सत्कुले. कर्म भगवत्परिचर्यादि वयो यौवनादि । विद्या श्रौतस्मार्तादिः बुद्धिर्विवेकात्मिका धनं वित्तम् ॥ २६ ॥

कथं तर्हि ध्रुवादिभ्यः सम्पदो ददासि ? इत्यत्राह–मानेति । मानो गर्वः स्तंभोऽनम्रता ऽविवेको वा तयोर्निमित्तानां जन्मादीनां पूर्वमन्यपरिगणितानां समन्ततः सर्वश्रेयःप्रतिकूलानां सद्भावेऽपीति शेषः । मत्परस्तेषु न मुह्येदित्यर्थः । हन्त हे अनघ ! ॥ २७ ॥

अस्य चेदानीं मत्परत्वादन्यैर्दुष्प्रापमपि ददाम्यामीति वक्तुं तस्य मोहाभावमनुगृह्णाति–एष इति त्रिभिः । एष बलिः दानवानां दैत्यानांच आधिपतिः कीर्त्तिवर्द्धनश्च अजयां दुर्जयाम् मम मायामजैषीजयेदित्यर्थः ॥ २८ ॥

कीर्तिवर्द्धनत्वमेव प्रपञ्चयति–क्षीणं रिक्थं धनं यस्य सोऽपि स्थानाच्च्युतोऽप्याधिपत्याद्भ्रष्टोऽपि शत्रुभिर्धर्षितोऽपि बद्धोऽपि ज्ञातिभिः परित्यक्तोऽपि यातनां प्रापितोऽपि ॥ २९ ॥

गुरुणा उशनसा भर्त्सितोऽपि शप्तोऽपि सुव्रतः दृढसङ्कल्पः सत्यं न तत्याज तथा मया छलेन धर्म उक्तः तथाऽप्ययं सत्यवाक् तं धर्मं न त्यजति ॥ ३० ॥

अस्य मोक्षप्रदानं सङ्कल्पयति–एष इति । अमरैरपि प्राप्तुमशक्यं स्थानं मल्लोकं भावितः प्रापयिष्यत इत्यर्थः । देहावसाने मुक्तो भविष्यतीति भावः । जीवदशायाम् इन्द्राधिपत्यं भविष्यदनुगृह्णाति, सावर्णेरिति । सावर्णिमनोरन्तरस्य सम्बन्धीन्द्रोऽयं बलिरहमेवाश्रयो यस्य स भविता भविष्यति सावर्णिमन्वन्तरेऽयमिन्द्रो भविष्यतीत्यर्थः ॥ ३१ ॥

आधुनिकं सुतललोकाधिपत्यमनुगृह्णाति, तावदधुना विश्वकर्मणा विनिर्मितं सुतलं लोकमध्यास्तम् तत्राधिपतिर्भूत्वाधिवसत्वित्यर्थः । सुतलं विशिनष्टि—यत्र सुतले निवसताम् आध्यादयो मत्कटाक्षेण हेतुना न सम्भवन्ति तत्राधयो मनःपीडाः व्याधयो दैहिकाः क्लमः ग्लानिः तन्द्री अनवधानता पराभवः शीतोष्णादिभिरभिभवः उपसर्गोऽन्योऽप्युपद्रवः ॥ ३२॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

नानायोनिषु उत्तमत्वेन मदोद्रेकहेतोरपि पुरुषयोनेर्यदृच्छया प्राप्तौ मदनुगृहीतस्य पुंसो मदो नैवोत्पद्यत इत्याह–यदा कदाचिदिति । अयं जीवात्मा निजकर्मभिर्नानायोनिषु संसरन् कदाचिदैववशात् पौरुषीं गतिमाव्रजेत् ॥ २५ ॥

तत्र पौरुषगतौ यद्यस्य जीवात्मनो मदर्चनादौ स्तम्भस्तन्द्रीलक्षणा नभवेत्तर्ह्ययं मदनुग्रहः मत्कटाक्षपातलक्षण इति ज्ञातव्यम् ॥ २६ ॥

स्वभक्तलक्षणमाह–मानस्तम्भेति पञ्चम्यर्थे जन्मादीनामिति षष्ठी ॥ २७ ॥

एतल्लक्षणदर्शनाय दवीयान्मार्गो न गन्तव्यः किन्त्वत्रैवेति भावेनाह–एष दानवेति । अजयाम् अजेयां न जयो यस्याः सा अजयेति ॥ २८ ॥

यातनाम् तीव्रवेदनाम् ॥ २९ ॥

सत्यत्यागनिमित्तक्षीणत्वादिकं प्राप्तोऽपि सत्यं न त्यक्तवानित्यन्वयः ॥ ३० ॥

भवतास्मै किमनुग्रहीतं त्वद्भक्तायेति तत्राह–एवमिति । किं तत्स्थानमत्राह, सावर्णेरिति ॥ ३१ ॥

तर्हि तावत्पर्यन्तमासुरोद्रेकवदेवंविधं क्लेशमनुभूय क्षीयतां किम् ? तत्राह–तावत्सुतलमिति । तत्रान्येषामपि क्लेशानुभवो नास्ति किम्पुनरस्येति भावेन वक्ति, यत्राधय इति । उपसर्गा उपद्रवाः ॥ ३२॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीप्राप्तिद्विधा कर्मादिना भगवदनुग्रहेण च तत्र ब्रह्मणेत्यादिना कर्मणाप्तायाः एव श्रियो दोषो वर्णितः मद्दत्तायास्तु तास्त्वेव स इत्याह–जन्मेति । अतः सुतलाधिपत्येन पुनः स्वर्गाधिपत्येन च न मदो भवितेति भावः ॥ २६—३१ ॥

तन्द्रीति क्वचित् उणादावी प्रत्ययोऽयम् ॥ ३२—३६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तत्र सर्वस्यैवाऽनुग्राह्यजीवस्य धनानि हरामि कस्यचिन्न हरामि च कस्मैचित् अतिशयेन ददामि च मदनुग्रहस्य लोकैरतर्क्याद्विविधजातीयत्वादतो जीवेषु मदनुग्रहलक्षणं श्रृणुवित्याह–यदेति । नानायोनिषु कृमिकीटादिष्वपि अनीशः परतन्त्रः संसरन्नेव यदा कदाचिदेव पौरुषीं गतिं मनुष्यजन्म प्राप्नुयात् ॥ २५ ॥

तत्र पौरुष्यां गतौ जन्मादिभिर्यदि भ्रंशोऽवहेलनादिर्हेतुर्गर्वो नभवेत्तदा तत्र पुंसि मदनुग्रहः अयं पूर्वोक्तात् धनहरणलक्षणादन्यः अनुमेय इत्यर्थः । तस्य धनादिकं नापहरामि अपकारकत्वाभावादिति भावः ॥ २६ ॥

किं च मानो गर्वस्तद्विशेषः स्तम्भोऽनम्रता तयोर्निमित्तभूतानां जन्मादीनां न मुह्येत "नाग्निस्तृप्यति काष्ठानाम्" इति वत् षष्ठी तैर्जन्मादिभिर्न मुह्येदित्यर्थः । समन्ततः सर्वथैव हन्त आश्चर्यमेतदिति पदद्वयप्रयोगात् पूर्ववत् यदि शब्दाप्रयोगाच्च कदाचिदपि न मुह्येदिति सच मत्परो मदेकान्तभक्त एवात्यान्तिकमदनुग्रहवानेव पूर्वोक्तादपि विशिष्यत एव तादृशेभ्यो ध्रुवादिभक्तेभ्यः सम्पदो ददाम्येवेति भावः । कर्मजन्मा हि सम्पदनर्थकारिणी तामेव प्रथमानुकम्प्यभक्तस्य भगवान् हरति नतु स्वदत्तामिति केचित् स्वभक्तप्रेमवर्द्धनचतुरस्य हरेर्नायमपि नियमः पाण्डवादावपि सम्पदपहारदर्शनादित्यपरे ॥ २७ ॥

नन्वास्तामेतत् प्रस्तुतो बलिरयं तव कीदृशानुग्रहवान् भक्तो यस्य सम्पदो हरसीति तत्राह, एष इति । अजैषीत् ननु जेष्यति जयतीति वा प्रयुक्तं तेन पूर्वमेव मायां जितवतोऽस्य स्तस्सादयो मायिकाः कुतः सम्भवेयुर्येन्नि ब्रतार्थं मया धनैश्वर्यहरणं कार्यमितिद्योतितं सीदन्नपि न मुह्यतीति सम्पद्भिरमुह्यन्नपि जनो विपत्पातित्वात् वैक्लव्यान्मुह्यत्येव दृष्ट इति भावः ॥ २८ ॥

अयं तु मयापि विपत्सिन्धुमध्ये निक्षिप्तोऽपि न मुह्यतीति किं वक्तव्य ज्ञानष्ठालश्माद न त्यजतीत्याह–क्षीणेति ॥ २९ ॥

इन्द्रसेन महाराज ! याहि भो भद्रमस्तु ते ।
सुतलं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ॥ ३३ ॥
न त्वामभिभविष्यन्ति लोकेशाः किमुतापरे ।
त्वच्छासनातिगान्दैत्यांश्चक्रं मे सूदयिष्यति ॥ ३४ ॥
रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् ।
सदा सन्निहितं वीर ! तत्र मां द्रक्ष्यते भवान् ॥ ३५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

"न ह्येतस्मिन् कुले कश्चिन्निःसत्वः कृपणः पुमान्" इत्यादिना मया प्रथमतश्छलैरेवं प्रायेणाधर्मोपि धर्म उक्तः तथैवान्ते "विप्रलब्धो ददामीति त्वयाहं चाढ्यमानिना । तद्व्यलीकफलं भुङ्क्ष्व निरयं कतिचित्समा" इत्यनेन धर्मोऽप्यधर्म उक्तः तदप्ययं सत्यवाक् सत्यं न त्यजति अन्यस्त्वेवं विधेऽर्थे "शठं शाठ्यं प्रकुर्वीत" इति नीत्या शाठ्यमेव कुर्यात् तस्मान्मया भक्तवत्सलेनापि कृतमेतस्यैतादृशकदर्थनं स्वभक्तिनिष्ठानिःसीमधैर्यादिगुणप्रख्यापनार्थमेवेति भावः न चाऽस्य सम्पदो हरामीति त्वया ज्ञेयमित्याह—एष इति । अमरैर्दुष्प्रापमिति इन्द्रपदात्स्वर्गादपि सुतलस्याधिक्यं तदानीमेवाद्भुतं श्रीकृष्णदत्तश्रीदामाधामवदिति ज्ञेयम् ॥ ३० ॥

नन्वैन्द्रं पदं त्वस्य गतमिति मन्तव्यमित्याह—सावर्णेरिति । न च तदापि तत्रापि देवा इमं कदर्थयिष्यन्तीति वाच्यं मदाश्रयः अहमस्य द्वारपालको भूत्वा जाग्रद्रक्षां करिष्यामीति भावः विश्वकर्मणा विशेषेण स्वर्गीयामरावतीपुरादतिवैशिष्ट्येन निर्मितामिति भगवदभिप्रायेण तत्क्षणादेव तत्ततोऽधिकं जातमिति भावः ॥ ३१ ॥

यत् यत्र ॥ ३२ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मानो आत्मनः पूज्यत्वं स्तम्भः पूज्याऽपूजकत्वम् ॥२७॥२८॥
यातनां पीडां यापितः प्रापितः ॥ २९ ॥

"न ह्येतस्मिन् कुले कश्चिन्निःसत्वः कृपणः पुमान्" इत्यादिना छलैर्वञ्चितोऽपि सत्ये उत्साहजनकैर्वाक्यैर्मया अयं बलिरुक्तः प्रोत्साहितोऽपि सत्यं न जहौ यतः सत्यवाक् यतः धर्मं न त्यजति ॥ ३० ॥

मे मया ॥ ३१ ॥

अध्यास्तामधिवसतु यत् यस्मिन् निवसतां ममेक्षया आध्यादयो न सम्भवन्ति तत्र क्लमः ग्लानिः तन्द्रा अनवधानता उपसर्गाः अन्य उपद्रवाः ॥ ३२ ॥

---

### भाषा टीका ।

इस संसार में पडा हुआ जीवात्मा अपने कर्मों के परवश होकर नाना योनियों में भटकता हुआ किसी समय पर मनुष्य योनि को भी प्राप्त होता है ॥ २५ ॥

जन्म, कर्म, वय, रूप, विद्या, ऐश्वर्य, और धन आदिक से यदि इस मनुष्य जन्म में गर्व न होवे, तो वह हमारा अनुग्रह जानो ॥ २६ ॥

मान अनम्रता से होने वाले सर्व श्रेय कार्य के प्रतिकूल जन्म कर्मादिकों के मदसे मत्परायण जन कभी मोह को प्राप्त नहीं होता है ॥ २७ ॥

और यह बलि तो दैत्य दानवोंकी कीर्त्ति का बढाने वाला है और इसने माया को भी जीत लिया है कि—जो यह इतना दुःख पाकर भी मोह को नहीं प्राप्त होता है ॥ २८ ॥

क्योंकि ? इसको हव्य के भाग से हीन कर दिया स्थान से च्युत होगया, शत्रुओं ने बांधा और फटकारा, और जाति के लोगों ने त्याग दिया और बहुत सी इसको यातनादी ॥ २९ ॥

और गुरुजी ने भी बहुतसा धमकाया और शाप भी दी तौ भी इस सुव्रत ने सत्य नहीं छोडा, और हमने भी इससे छल की बातें करी पर यह सत्य वक्ता धर्म को नहीं छोडता है ॥ ३० ॥

और हे ब्रह्मन् ! अब हमने इसको देवताओं को दुष्प्राप्यस्थान दिया, और हमारा आश्रय लेने वाला यह सावर्णि मन्वन्तर का इन्द्र होगा ॥ ३१ ॥

तब तक तो यह सुतल में विश्वकर्मा के रचे हुए स्थान में निवास करैं जहां रहने वालों को आधि, व्याधि, ग्लानि, तन्द्रा, सुख, दुःख इत्यादिक उपसर्ग हमारी इच्छा से नहीं होते हैं ॥ ३२ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

एवं ब्रह्माणं प्रत्युक्त्वा करुणापरवशः साक्षाद्बलिं प्रत्याह, इन्द्रसेनेति, चतुर्भिः ॥ ३३ ॥

त्वच्छासनमतिगच्छन्त्यतिवर्तन्त इति तथा तान् ॥ ३४ ॥

तथाऽपि भवद्वियोगासहनिच्छन्तं प्रत्याह, सदेति ॥ ३५ ॥

तत्र दानवदैत्यानां सङ्गात्ते भाव आसुरः ।
दृष्ट्वा मदनुभावं वै सद्यः कुण्ठो विनंक्ष्यति ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे बलिमोक्षणं नाम
द्वाविंशोऽध्यायः ॥ २२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सङ्गाद्य आसुरो भावः स विनङ्क्ष्यति ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवं ब्रह्माणमुक्त्वाऽथ बलिमुवाच. हे इन्द्रसेन महाराज !! ज्ञातिभिः परिवृतस्त्वं सुतलं स्वर्गिभिरपि प्रार्थ्यं लोकं याहि गच्छ तत्र तव भद्रमेव मेऽनुग्रहाद्स्तु ॥ ३३ ॥

तत्र वसन्तं त्वां लोकेशा इन्द्रादयोऽपि नाभिभविष्यन्ति किमु वक्तव्यमपरे नाभिभविष्यन्तीति, ये च तत्र त्वदाज्ञातिलङ्घिनो दैत्यास्तान् मम चक्रं सुदर्शनं सूदयिष्यति हनिष्यति ॥ ३४ ॥

सर्वेभ्योऽप्युपद्रवेभ्यस्त्वां सानुगं सपरिच्छदं सोपकरणमहं रक्षिष्ये, किञ्च हे वीर ! तत्र सुतले सदा सन्निहितं त्वद्द्वारि वसन्तं मां भवान् द्रक्ष्यते ॥ ३५ ॥

किंच दैत्यानां सङ्गाद्धेतोस्तव य आसुरो भावः स तत्र मम अनुभावं दृष्ट्वा सद्यः कुण्ठः प्रतिहतो विनङ्क्ष्यति । मदनुभावाद्भवानासुरं भावं त्यक्ष्यतीत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भवदाज्ञामन्तरेणेमं कथं गमिष्यामीति शङ्कामाभूदित्याह, इन्द्रसेनेति । मृतवदेकः कथङ्गमिष्यामीत्यत उक्तं ज्ञातिभिरिति ॥ ३३ ॥

स्वर्गस्थैरथ्यं चेत्स्पर्द्धया लोकेशा मामुपद्रविष्यन्तीति तत्राह, न त्वामिति । राज्यं त्यक्त्वा गतस्य तव शासने वयं न तिष्ठाम इति तिष्ठतां दण्डमाह—त्वच्छासनेति ॥ ३४ ॥

किं बहुनोक्तेन सर्वतो भद्रभावकं तवास्तीत्याह—सर्वत इति, न केवलं सन्निधानविशेषाद्रक्ष्यामि किन्तु प्रत्यक्षत एवेत्यत उक्तं तत्र मामिति ॥ ३५ ॥

तत्राप्ययमनर्थस्तदवस्थ एव दानवादीनां संसर्गादिति च शङ्का माभूदित्याह—तत्र दानवेति । सद्यः कुण्ठ इत्येकं पदं सद्यः कुण्ठः छेदो यस्य स तथा प्रवनंक्ष्यतीति विनङ्क्ष्यतीति पाठे निर्मूलो भविष्यतीत्यर्थः ॥ ३६ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
द्वाविंशोऽध्यायः ॥ २२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

एवं ब्रह्माणं प्रत्युक्त्वा सद्यादूबलिमाह—इन्द्रसेनेति । महाराजेति तव महाराजत्वं नापयाति यतः स्वर्गिभिः प्रार्थ्यमेव न तु लभ्यम् ॥ ३३ ॥

सूदयिष्यति खण्डयिष्यति ॥ ३४ ॥

नच मद्विरहदुःखमित्याह—सदासन्निहितमिति ॥ ३५ ॥

दुःसङ्गाच्च माभैषीरित्याह—तत्रेति । त्वादृशभक्तसङ्गाद्दुष्टा अपि शिष्टा भवन्तीति भावः ॥ ३६ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
द्वाविंशश्चाष्टमस्कन्धे सङ्गतः सङ्गतः सताम् ॥ २२ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इत्थं ब्रह्माणं प्रत्युक्त्वाऽथ साक्षाद्बलिं प्रत्याह—इन्द्रसेनेति, चतुर्भिः । भो इन्द्रसेन ! ते भद्रं भवतु भो महाराज ! सुतलं याहि ॥ ३३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

त्वच्छासनमतिगच्छन्ति अतिक्रामन्तीति तथा तान् ॥३४-३६॥
इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
द्वाविंशाऽध्यायार्थ प्रकाशः ॥ २२ ॥

---

भाषा टीका ।

फिर बलि से भगवान् बोले, कि—हे इन्द्रसेन ! हे महाराज ! तुमारा मंगल हो तुम अपने ज्ञाति परिकर सहित स्वर्ग वासियों से प्रार्थित सुतल को जाओ ॥ ३३ ॥

और बडे २ लोकेश लोग भी तुमारा अभिभव ( तिरस्कार नहीं करसकेंगे और बिचारों की तो बात ही क्या, दैत्यों में भी जो तुमारी आज्ञा को उलंघन करेंगे उन दैत्यों को हमारा चक्र नष्ट करदेवेगा ॥ ३४ ॥

तुमारे अनुग और परिकर परिच्छद सहित तुमारी हम रक्षा करेंगे ॥ हे बीर ! तुम हमको अपने यहां सदाही सन्निहित देखोगे ॥ ३५ ॥

और वहां भी दैत्यदानवों के संग से जो तुमारा आसुर भाव है वह हमारा प्रभाव देखकर तत्काल कुंठित होकर नष्ट होजायगा ॥ ३६ ॥

इति श्रीमद्भागवत अष्टमस्कन्ध में द्वाविंश अध्याय की
श्रीवृन्दावनस्थ भगवताचार्यकृत
भाषा टीका समाप्ता ॥ २२ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

## ॥ त्रयोविंशोऽध्यायः ॥

श्रीशुक उवाच ।

इत्युक्तवन्तं पुरुषं पुरातनं महानुभावोऽखिलसाधुसम्मतः ।
बद्धाञ्जलिर्बाष्पकलाकुलेक्षणो भक्त्युत्कलो गद्गदया गिराब्रवीत् ॥ १ ॥

बलिरुवाच ।

अहो प्रणामाय कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्त्वदनुग्रहोऽमरैरलब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ २ ॥

श्रीशुक उवाच ।

इत्युक्त्वा हरिमानम्य ब्रह्माणं सभवं ततः ।
विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ॥ ३ ॥
एवमिन्द्राय भगवान् प्रत्यानीय त्रिविष्टपम् ।
पूरयित्वाऽदितेः काममशासत्सकलं जगत् ॥ ४ ॥
लब्धप्रसादं निर्मुक्तं पौत्रं वंशधरं बलिम् ।
निशाम्य भक्तिप्रवणः प्रह्लाद इदमब्रवीत् ॥ ५ ॥

प्रह्लाद उवाच ।

नेमं विरिञ्चो लभते प्रसादं न श्रीर्न शर्वः किमुताऽपरे ते ।
यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवन्द्यैरपि वन्दिताङ्घ्रिः ॥ ६ ॥
यत्पादपद्ममकरन्दनिषेवणेन ब्रह्मादयः शरणदाश्नुवते विभूतीः ।
कस्माद्वयं कुसृतयः खलयोनयस्ते दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ॥ ७ ॥
चित्रं तवेहितमहोऽमितयोगमायालीलाविसृष्टभुवनस्य विशारदस्य ।
सर्वात्मनः समदृशो विषमः स्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

त्रयोविंशे बलौ याते सुतलं सपितामहे ।
उपेन्द्रेण दिवं गत्वा पूर्ववन्मोदितो हरिः ॥

बाष्पस्य कलाभिर्बिन्दुभिराकुले ईक्षणे यस्य भक्त्या उत्कल उत्कण्ठः ॥ १ ॥

अहो त्वत्प्रणाममहिमा यदर्थं कृतः समुद्यम एव प्रपन्नानां भक्तानां योऽर्थस्तस्य विधावभक्तेऽपि तस्य सम्पादने समाहितो ऽप्रमत्तः स्थितः कुतः ? यद्येनोद्यमेन लोकपालैरमरैः सत्त्वप्रधानै-रप्यलब्धपूर्वस्त्वदनुग्रहोऽपसदे नीचे राजसे मय्यर्पितः अयं भावः परमेश्वराय तुभ्यमहं वराकस्त्रिलोकीं दत्तवानित्येतदा-स्ताम् प्रणामोऽपि न सम्यक् कृतः किन्तु तदर्थमुद्यममात्रं कृतं, तेन च कर्मतपोदानादिकोटिभिरप्यलभ्यस्त्वदनुग्रहः सम्पादितः अहो त्वत्प्रणामप्रभावाश्चर्यमिति ॥ २ ॥ ३ ॥

### श्रीधरस्वामिकृतभावार्थदीपिका ।

अशासदुपेन्द्रः सन् पालयामास ॥ ४ ॥ ५ ॥

दुर्गपालोऽसि "रक्षिष्ये सर्वतोऽहं त्वाम्" इत्युक्तत्वात् ॥ ६ ॥

हे शरणद आश्रयप्रद ! ये कुसृतयो दुर्वृत्ताः खलयोनय उग्रजातयश्च ते वयं तस्य भवतो दाक्षिण्यदृष्टेः पदवीं कस्माद्धेतोः प्रणीताः बहुमानेन चित्तानुवर्त्तनं दाक्षिण्यं तेन या दृष्टिस्तद्विषयतां प्रापिताः ॥ ७ ॥

भक्तप्रियत्वादिति चेत्तर्ह्येवं तवेहितमहो चित्रम् किन्तत् ? सर्वात्मनः समदृशश्च स्वभावो विषम इति यत् सर्वात्मत्वे चित्रचरितत्वे हेतुः अमिताऽचिन्त्या, योगमाया तस्या या लीला तया विसृष्टानि विरचितानि भुवनानि येन तस्य अहो इत्यत्र सन्धिरार्षः समदृक्त्वे हेतुः विशारदस्य सर्वज्ञस्य अथवा भक्तप्रियत्वेऽपि तव वैषम्यं नास्त्येव, यतः कल्पतरुस्वभावः सन् भक्तप्रियोऽसि नहि कल्पतरुराश्रितानामेव कामान्पूरयन्नपि विषमो भवतीत्यर्थः ॥ ८ ॥ ९ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

एवमनुगृहीतो बलिर्भगवन्तं तमाहेत्याह मुनिः-इतीति । इतीत्थमुक्तवन्तं पुराणपुरुषं भगवन्तं गद्गदया गिरा अब्रवीत् कथम्भूतः ? भक्त्योद्गलः उत्कण्ठः हर्षबाष्पबिन्दुभिराकुले ईक्षणे यस्य सः अखिलानां साधूनां सम्मतः महानुभावः उक्तविधो यस्य सः ॥ १ ॥

तदेवाह-अहो इति । अहो त्वत्प्रणामस्य प्रभाव इत्याह, प्रणामाय प्रणामार्थं कृतः समुद्यम एव प्रपन्नानां भक्तानां योऽर्थोऽभिमतफलस्य विधौ सम्पादने समाहितोऽप्रमत्तः स्थितः, कुतः? यत् येनोद्यमेन लोकपालैरमरैः सत्त्वप्रधानैरप्यलब्धपूर्वस्त्वदनुग्रहोऽपसदे नीचे असुरे मयि समर्पितः ॥ २ ॥

इत्थं हरिमुक्त्वा प्रणम्य ततो ब्रह्माणं रुद्रञ्च प्रणम्य मुक्तः पाशेभ्य इति शेषः । प्रीतो बलिरनुगैस्सह सुतलं लोकं विवेश प्रवेष्टुमुद्युक्तो बभूवेत्यर्थः ॥ ३ ॥

ततः इत्थं बलेर्गृहीतं त्रिविष्टपं भगवानिन्द्राय प्रत्यादिश्य प्रददौ एवमदितेः काममिष्टं पूरयित्वा सकलं जगदशासदुपेन्द्रः सन् पालयामास ॥ ४ ॥

ततो लब्धो भगवत्प्रसादो येन तं पाशेभ्यो निर्मुक्तं पौत्रं वंशवर्द्धनं बलिं निशाम्य दृष्ट्वा प्रह्लादः भक्तितत्परो भक्तिप्रेमसुधारससमुद्रे परिप्लुत इत्यर्थः । वक्ष्यमाणमुवाच ॥ ५ ॥

तदेवाह-नेति त्रिभिः । अहो तवेदं दुर्लभानुग्रहस्यापि सौलभ्यं परत्वं चानितरसाधारणमिति विस्मयपूर्वकं विज्ञापयति, नेति । इममस्मद्विषयं तवानुग्रहं चतुर्मुखलक्ष्मीरुद्रा अपि न लेभिरे येऽपरे इन्द्रादयो न लेभिरे इति किमुवक्तव्यम् । एवं तत्प्रसादस्य दौर्लभ्यं क्वचिद्विषयविशेषे सौलभ्यञ्चोक्तम्, कुतः? एतद्विपरीतमित्यत आह-यद्यस्मादसुराणां क्रूरस्वभावानामपि नोऽस्माकं दुर्गपालः दुःखात्त्राता भवसि अथ परत्वमाह-विश्वाभिवन्द्यैः सकलजगत्पूज्यैर्ब्रह्मादिभिरप्यभिवन्दिताङ्घ्री यस्य सः त्वम् असुराणां नो दुर्गपालोऽसीत्यनेन नास्मद्गुणादर्शनेनास्मासु तव प्रसादप्रवृत्तिः किंतु केवलं कृपयैवेति सूचितम् ॥ ६ ॥

तदेव व्यञ्जयन्नाह-यदिति । हे शरणद श्रेयःसाधनप्रद! अनेन स्वाहितमपि वयं न विद्म इति सूचितम्! ब्रह्मादयो यस्य तव पादपद्मयोर्यो मकरन्दः तस्य सेवया विभूतिमैश्वर्यं सृष्ट्याद्यधिकारमश्नुवते प्राप्नुवन्त्यनेन परत्वं स्पष्टीकृतम् । ते एवम्भूतस्य तव दाक्षिण्यदृष्टिपदवीमनतिक्रमणीयतां हेतुकृपादृष्टिविषयतां कस्माद्धेतोर्वयं कुसृतयः कुमतयः खलयोनय उग्रजातयश्च प्रणीताः प्रापिताः केवलं कृपयैवेति भावः । पूर्वं विरिञ्च्यादयोऽपीत्थं प्रसादं न लेभिरे इत्यनेन तत्सेवया विना तत्प्रसादाविषयत्वमुक्तमत्र तु तत्सेवया तद्विषयत्वमित्यतो न विरोधः ॥ ७ ॥

एवं तर्हि प्राकृतवत्कांश्चिदनुगृह्णन् कांश्चिच्च निगृह्णन् अहमपि विषमस्वभाव एवेति किं मां प्रशंसतीत्यत्राह——चित्रमिति । तव ईहितं निग्रहानुग्रहादिरूपमहो विचित्रं न तु कर्मवश्यप्राकृतेहितसजातीयमित्यर्थः । वैचित्र्ये हेतुं वदन्नकर्मवश्यतां व्यञ्जयन् विशिनष्टि——अमितेति । अमितशक्तियुक्तसङ्कल्पज्ञानेन लिमित्तेनानायासस्सृष्टभुवनस्येत्यर्थः । विशारदस्य सृष्ट्युपयुक्तसार्वज्ञ्यादिकल्याणगुणगणयुक्तस्य कृत्स्नचिदचिदन्तरात्मनः अत एव समदृशः वैषम्यनैर्घृण्यादिरहितस्यैव तव भक्तप्रियो भवसीति यदयमविषम एव स्वभावः न तु विषमः तत्र दृष्टान्तं वदन्विशिनष्टि, कल्पतरोः स्वभाव इव स्वभावो यस्य स त्वम् इति न हि कल्पतरोराश्रितार्थापूरणे न वैषम्यापादनं युक्तमिति भावः ॥ ८ ॥

---

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

भगवति भक्तिमतः पुरुषस्य किमपि दुःसाध्यं नास्ति इत्येतत्प्रपञ्च्यतेऽस्मिन्नध्याये, तत्र बलेर्हर्षोद्गाकरणम् वक्तुमाह, इत्युक्तवन्तमिति । भक्तेरुत्कल उद्रेको यस्य स तथा ॥ १ ॥

समुद्यतः ऊर्ध्वं वर्धमानस्याऽस्य तव प्रसादो अहो कुतो विस्मय इत्यत उक्तं, कुत इति. त्वयेति शेषः । इतोपि विस्मय इत्याह, प्रपन्न इति. समाहितः एकाग्रीकृतोऽन्यज्ञानवसरतुच्छ इत्यर्थः । त्वमपि तेष्वेकः किं न स्यादित्यत आत्मानं धिक्करोति, यल्लोकेति. असुरजातावप्यपसदे अधमे अलब्धपूर्व इति यथायोग्यमिति ज्ञातव्यम् ॥ २—४ ॥

लब्धप्रसादश्च निर्मुक्तश्च तम ॥ ५ ॥

विश्वाभिवन्द्यैर्ब्रह्मादिभिरभिवन्दिताङ्घ्रिः श्रीकान्तोऽसुराणामपि नो दुर्गपालो द्वारपाल आसीदिति यदिमं प्रसादं विरञ्च्यादिभिर्न लभ्यते इत्यन्वयः ॥ ६ ॥

कुसृतयः कुत्सितमार्गास्तत्र हेतुमाह, खलयोनय इति. तस्य ते तव कस्माद्धेतोर्दाक्षिण्यदृष्टिपदवीं प्रणीताः भक्तानुकम्पित्वमन्तरेणेति शेषः । "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः ॥ ७ ॥

भगवत्स्वरूपत्वान्महिमभपि लोकविलक्षणमिति भावेनाह चित्रमिति । तव चित्रं नानाविधमीहितं चेष्टितमहो "अहो ईदृग्विस्मये" इति यादवः । तत्कथमिति तत्राह-विषमेति । विषमस्वभावोसि भक्तप्रियोऽसि कल्पतरुस्वभावोऽसि यत्तस्माद्विस्मयः

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

समदृशो विषमस्वभावत्वं सर्वात्मनो भक्तप्रियत्वेन कल्पतरुस्वभावत्वं च विस्मयहेतुरित्यर्थः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

बद्धाञ्जलित्वानन्तरं "पदं तृतीयं कुरु शीर्ष्णि मे निजम्" इति प्राचीनतान्निवेदनाऽनुसारेण तच्छीर्ष्णि पदे कृते परमानन्देन निवेदयति-अहो इति । अत एव श्रुतौ "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्" इति येन केनचित् प्रणामाय कृतः समुद्यमोऽपि प्रपन्नानां परमानन्दयुक्तानां भजतां स पुरुषार्थस्तस्य विधाने निमित्ते समाहितः साऽवधानो भवति तदेव क्रमात् पर्यवसाययतीत्यर्थः ॥ १ ॥

तदेवदहो आश्चर्यं इदन्तु ततोऽप्याश्चर्यमित्याह-यद्यस्त्वदनुग्रहस्तत् त्वया मय्यपसदे स्वयशोलिप्सया तादृक्प्रतिज्ञादिख्याप्यादति नीचे आत्माप्यसुरेऽर्पितः स त्वमरैर्मृत्युमतिक्रान्तैर्जीवन्मुक्तैरप्यलब्धपूर्व इत्यर्थः । यद्वित्यत्र लब्धेति च "सुपां सुलुक्" ७।१।३९" इत्यादिना सुब्लुक् छान्दसः ॥ २-५ ॥

अत्राश्चर्येऽपि मादृशे योऽयं प्रसादस्य कारणं नाम भवतः करुणामयत्वमेव नान्यदिति वक्तु तस्य परमत्वं दर्शयति, तत्र यथा कश्चिन्निजेश्वरं प्रति वदति पुत्रादपि मयि तव वात्सल्यमिति तथैव परमभक्तानप्युल्लिख्य निवेदयति, नेममिति. इममर्थं स्पष्टयति, यन्न इति. अत एव परमभक्तिमन्तं निरूपयमाणेन श्रीशुकदेवेन नेमं विरिञ्च इत्यादिकं यद्वक्ष्यते तत्तुल्यता नात्र मन्तव्या योऽयं भगवानत्र बन्धकः स तु तत्र स्वयमेव बद्ध इति हि सद्वशीकारे महानेव भेदः ॥ ६ ॥

अथ कारणान्तराभावं दर्शयति—यत्पादेति । विभूतीः प्राधान्येन ता एव न त्वेषां तादृशं प्रसादम् ॥ ७ ॥

न केवलं मादृशभक्त एव तवैतादृशत्वं युक्तमितीतं किन्तु भक्तजने तथैवेति तदेव स्थापयति-चित्रमिति । यस्त्वं भक्तप्रियोऽसि सोऽपि समदृशस्तव स्वभाव अविषमः विषमो न भवति तत्र हेतुगर्भं विशेषणं कल्पतरुस्वभाव इति तस्माद्विषमस्वभावतया प्रतीतेऽपि त्वय्यवैषम्यमित्यतीव चित्रमिति यद्वा परत्रापि कल्पवृक्षाविलक्षणे समान एवाश्रयणीये वस्तुनि भक्तपक्षपातरूपवैषम्यदर्शनात् तद्वैषम्यमपि समस्यैव स्वभाव इति लब्धे तदपरिहार्यमेवेति सिद्धान्तयितव्यं ततश्च विषमस्वभाव इत्येव व्याख्येयं तथा पूर्वत्रापि नतस्येत्यादौ भक्तान् भजत इति वैषम्य एव योजनीयम् इति वस्तुतस्तु श्रीभगवत्यचिन्त्यैश्वर्यमेव मुख्यस्तत्र विरोधे हेतुः यदुक्तं "नमो नमस्ते ऋषभाय सात्वताम्" इत्यादौ द्वितीयस्य चतुर्थे टीकायां तदेवं वैषम्यप्रतीतावप्यदोषत्वायाचिन्त्यैश्वर्यमाहेति, तदुक्तं भविष्ये "सर्वात्मनः समदृशो ह्यद्वयस्यानहङ्कृतेः । तत्कृतं मतिवैषम्यं निरवद्यस्य न क्वचित् ॥ तथाप्येकान्तभक्तेषु पश्य भूपानुकम्पितम्" इत्यादि. स्वयं श्रीभगवता च "समोऽहं सर्वभूतेषु" इत्यादि. अथवा समदृशस्तव विषमस्वभावो यस्तदहो चित्रम् अतिमाश्चर्यमित्यर्थः । वैषम्यमेवाह-भक्तप्रियो यदसीति समदृक्त्वे हेतुत्वेन त्रिधा पूर्णत्वं त्र्यहम् क्रियाशक्तौ तावदाह अमिता अनन्ता या योगमाया स्वरूपशक्तिस्तस्या या लीला चाह्लादिकक्रियावृत्तिस्तादृशवृत्त्याभासरूपा मायाशक्तिस्तया विशेषेण सृष्टानि भुवनानि अनन्तानि ब्रह्माण्डानि येन तस्य ज्ञानशक्तावाह—विशारदस्येति स्वरूपेऽप्याह—सर्वात्मन इति । सर्वमूलस्वरूपस्य नन्वेतं स्वभावः कल्पतरुरपि दृश्यते तत्राह—कल्पतरोरपि स्वभावो यस्मात् तथाविध इत्यहो चित्रमेवेत्यर्थः ॥ ८ ॥ ९ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

> प्रवेशितस्य सुतलं द्वारपालोऽभवद्बलेः ।
> प्रयोविशे विवीन्द्रं चोपेन्द्रः सन् पर्यपालयत् ॥

तदेवाह त्वन्मूर्ध्नि तृतीयं पदं विन्यस्य त्रिभुवनजे सह त्वामपि प्रतिगृह्णामि सर्वं एते लोकास्त्वां हतप्रतिश्रुतं जानन्त्वित्युक्तवन्तम् अत एव श्रुतिरपि "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्" इति उद्गतः उद्धारो गतो यस्य सः ॥ १ ॥

प्रणामार्थं कृतसमुद्यमोऽपि प्रपन्नभक्तानां वाञ्छितपूरणे समाहितः समर्थो भवेदित्यवैवावगतं त्वत्पदपद्मसम्पर्कः विष्णुरयमागत इति शुश्रूषुणात यदेव त्वामहमद्याक्षिपं तदैव त्वत्प्रणामार्थमुद्यम एव कृतः किन्तु असुराणां तस्य च गुरोर्भयादेव प्रणामो न कृतः हन्त हन्त स एवोद्यम इदं फलं फलति स्म किमित्याह—यद्यस्माल्लोकपालैरमरैः सत्त्वप्रधानैरपि अलब्धपूर्वस्त्वदनुग्रहः मूर्ध्नि चरणार्पणलक्षणः अपसदे नीचे राजसे मय्यर्पितः ॥ २ ॥

मुक्तो नागपाशात् ॥ ३ ॥ ४ ॥

समासेन बलिशक्रयोः सुतलस्वर्गप्रवेशमुक्त्वा व्यासेनाह, लब्धेति बन्धनान्मुक्तम् ॥ ५ ॥

दुर्गपालोऽसि "रक्षिष्ये सर्वतोऽहम्" इत्युक्तेः ॥ ६ ॥

हे शरणप्रद आश्रयप्रद । विभूतीः सम्पदः एव न त्वेतावन्तं प्रसादं कुतुनयः दुर्दृशः बहुमानेन चित्तानुवर्तनं यस्यास्तेन या दृष्टिस्तद्विषयतां प्रापिता जात्यैव ते प्रसिद्धा वयं निम्नाह्नाः कथमेतावदनुग्रहभाजनान्यभूमेत्यर्थः ॥ ७ ॥

न केवलं मादृशभक्तेष्वेव तवैतावाननुग्रहः किन्तु भक्तमात्रेषु येषु येष्वपीत्याह—चित्रमिति । हे अमितयोग अपरिमितयोगैश्वर्य तवेहितं चरित्रमहो चित्रमत्याश्चर्यं युक्ततीतमित्यर्थः । किन्तचित्रं समदृशोऽपि तव विषमः स्वभावः इति यत् किं मे समदृक्त्वलक्षणं तत्राह मायायाः स्वीयमायाशक्तेर्लीलया विसृष्टानि भुवनानि येन तस्य सर्वस्रष्टुरित्यर्थः । विशारदस्य सर्वाभिज्ञस्य सर्वात्मनः सर्वेषां चेतयितुः तेन सर्वेषां तव सृज्यत्वात् अभिज्ञेयत्वात् चेतयितव्यत्वाच्च सर्वेषु तेषु तव समदृक्त्वमेव दृष्टमित्यर्थः । किं मे वैषम्यं दृष्टं तत्राह भक्तप्रियो यदसीति तेषु सृष्टेषु मध्ये ये भक्तास्तेष्वेव प्रीणासि नान्येष्विति यत् एतदेव वैषम्यमित्यर्थः । तर्हि किं ममैष दोष एव ख्याप्यते ? नहि नहि किन्तु महागुण एवेत्याह—कल्पतरुस्वभाव इति । कल्पतरुर्यथा आश्रितानामेव कामं पूरयति न त्वनाश्रितानां

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

तथैव त्वं भक्तेष्वेव प्रीणासि नत्वभक्तेष्विति भजनवत्त्वमात्र एव तव प्रीतिरिति वस्तुतस्ते साम्यमेवायातं यदुक्तं त्वयैव "समोऽहं सर्वभूतेषु नमेद्वेष्योऽस्ति न प्रियः । ये भजन्ति च मां भक्त्या मयि ते तेषुचाप्यहम्" इति ॥ ८ ॥ ९ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

बल्यादीनां तत्तत्स्थानगमनं यज्ञसमाप्तिं च वर्णयति—इत्युक्तवन्तमिति, त्रयोविंशेन । उत्कलः उत्कराठः ॥ १ ॥

पूर्वोक्तप्रह्लादादिवाक्यश्रवणेन भगवदनुग्रहेण च सर्वं भगवदीयमिति ज्ञात्वा मया किमपि भगवते न दत्तमिति च ज्ञात्वा मया तु प्रणामोऽपि न कृतः किन्तु तत्समुद्यमः कृतस्तेनैव कृतार्थोऽस्मि तत्प्रणामाचैनादेर्महिमा तु किं वर्ण्यते इत्याह—अहो इत्यव्ययम् अत्र कैमुतिकन्यायद्योतकः प्रणामाय प्रणामार्थं कृतः समुद्यम एव, प्रपन्नानां भक्तानां योऽर्थस्तस्य विधौ सम्पादने समाहितः अप्रमत्तः स्थितः अहो किमुत प्रणामस्तत्र समाहितः किमुततराम् अर्चनध्यानादिस्तत्र समाहित इति वक्तव्यम, ननु, कुत एतत्त्वयावगम्यते इत्यत्राह—यत् येन समुद्यमेन लोकपालैरमरैः सत्त्वप्रधानैरपि अलब्धपूर्वः त्वदनुग्रहः "सदासन्निहितं वीर तत्र मां द्रक्ष्यते भवान्" इति पूर्वोक्तः असत्सदे नीचे राजसे मयि अर्पितः ॥ २ ॥

मुक्तः पाशेभ्यः ॥ ३ ॥

प्रत्यातीय प्रत्यर्प्य अशासत् उपेन्द्रः सन् पालयामास ॥ ४ ॥

भक्तिप्रवणः भक्तितत्परः निर्मुक्तं पाशेभ्यो विमुक्तं निशाम्य ज्ञात्वा ॥ ५ ॥

विश्वाभिवन्द्यैर्विरिञ्चयादिभिः दुर्गपालोऽसि "रक्षिष्येसर्वतोऽहं त्वाम्" इत्युक्तेः ॥ ६ ॥

हे शरणद आश्रयप्रद ! ब्रह्मादयः बहुगुणयुक्ताः यस्य तव पादपद्मयोर्मकरन्दः कीर्तिः तन्निषेवया विभूतीः ऐश्वर्याणि अश्नुवते प्राप्नुवन्ति तथाभूतस्य ते दाक्षिण्यदृष्टेः कृपावलोकस्य पदवीं विषयतां कुसृतयः कुत्सिता सृतिरासुरो मार्गो येषां ते खलयोनय उग्रजातयो वयं कस्माद्धेतोः प्रणीताः प्रापिताः ॥ ७ ॥

तं हेतुं स्वयं वदन् अत्यद्भुतचेष्टितं तथेति स्तौति-चित्रमिति । यत् यस्त्वं भक्तप्रियोऽपि भक्तपक्षपात्यपि अविषमस्वभावोऽसि तस्य तवेहितं चेष्टितम् अहो चित्रमत्यद्भुतमित्यन्वयः । भक्तपक्षपातित्वेपि अविषमस्वभावत्वम् स्फुटीकर्तुं विशिनष्टि—कल्पतरुस्वभाव इति । कल्पतरुस्वभाववत्स्वभावो यस्य सः यथा कल्पतरुः आश्रितजनानामेव सुखदोऽप्यविषमो भवति तथा त्वमसीत्यर्थः । कथम्भूतस्य मितः स्वल्पोऽपि अंशः युज्यते इति योगः सङ्कल्पः "एकोऽहं बहुस्याम्" इत्यादिश्रुतिप्रसिद्धः तस्य वशवर्तिनी माया तया सह या लीला तया विसृष्टानि विरचितानि भुवनानि येन तस्य ॥ ८—९ ॥

---

भाषा टीका ।

श्रीरुक्मिणीदेवीसमेतश्रीदेवकीनन्दनाय नमः ।

श्रीशुक उवाच ।

श्रीशुकदेवजीबोले, कि—पुरातन पुरुष के पूर्वोक्तवचनों को सुनकर अखिल साधुजनों के संमत महाप्रभाववाले और आंसुओं से व्याकुल नेत्र जिन का तथा भक्तिमें उत्कण्ठित होकर राजा बलि हाथ जोडकर गद्गद्वाणी से बोले ॥ १ ॥

बलिरुवाच ।

बलि बोले, कि—प्रभो ! आपको प्रणाम करने की महिमा ता किससे कहीजाय परञ्च प्रणाम के लिये किये हुए उद्यम का यह प्रभाव है, कि— वह उद्यम ही अभक्तों कोभी शरणागतभक्तजनों का जो अर्थ है उसके सम्पादन में सदा जागरूक रहता है क्योंकि ? जो आपका अनुग्रहवाडे २ लोकपालों को भी नही प्राप्त हुआ सो अनुग्रह मेरे सदृश नीच असुर पर आपने किया ॥ २ ॥

श्रीशुक उवाच ।

श्रीशुकदेवजीबोले, कि— राजाबलि, इतना कहकर श्रीहरि को नमस्कार कर तथा महादेवजी सहित ब्रह्माजी को नमस्कार कर वरुणपाश से छूटकर असुरों से सहित प्रसन्न होकर सुतल में प्रवेश करते हुए ॥ ३ ॥

हे राजन् ! भगवान् इस प्रकार इन्द्रको स्वर्ग देकर अदिति के मनोरथको पूर्णकर सकलजगत् का अच्छी तरह शासन करते हुए ॥ ४ ॥

भगवत्प्रसाद को प्राप्त होने वाले वरुण के पाश से विनिर्मुक्त हुए अपने पुत्रवंश को धारण करने वाले बलिको देखकर भक्तिप्रवण प्रह्लादजी भगवान से यह बोले ॥ ५ ॥

प्रह्लाद उवाच ।

प्रल्हादजी बोले, कि—हे भगवन् ! ऐसी कृपा आप की ब्रह्माजी के ऊपर भी नही हुई, तथा महादेवजी को भी यह प्रसाद नही मिला, जो कि— विश्ववन्दनीयों से अभिवन्दितचरणकमल जिन के ऐसे आप साक्षात् हमारे असुरों के द्वारपाल हुए ॥ ६ ॥

हे शरणदायक ! जिन आपके चरणकमल के मकरन्द की सेवा से ब्रह्मादिक अपनी २ विभूति को प्राप्त होते हैं फिर हे प्रभो ! कुत्सित मार्गवाले खलयोनि हम असुर लोग आप की कृपा कटाक्ष के पात्र कैसे हुए ? ॥ ७ ॥

आप अपनी अमित योगमाया से जब लीला करते हैं तब अनेक भुवनों की सृष्टि होजाती है इस प्रकार की तो परम विशारद ऐसे आपकी चेष्टा है परंच सर्वात्मक और समदर्शी होकर भी आपका स्वभाव है, कि-भक्तों पर प्रीति करते हो उसका भी कारण यही है, कि आपका स्वभाव कल्प वृक्ष सदृश है । जैसे कल्प वृक्ष के आश्रय लेने वालों की कामनाओं को ही पूर्ण करता है तौ भी उसका विषम स्वभाव नहीं कहा जाता ॥ ८ ॥

---

श्रीभगवानुवाच ।

वत्स ! प्रह्लाद ! भद्रं ते प्रयाहि सुतलाऽऽलयम् ।
मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ९ ॥
नित्यं द्रष्टासि मां तत्र गदापाणिमवस्थितम् ।
मद्दर्शनमहाह्लादध्वस्तकर्मनिबन्धनः ॥ १० ॥

श्रीशुक उवाच ।

आज्ञां भगवतो राजन् प्रह्लादो बलिना सह ।
बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृताञ्जलिः ॥ ११ ॥
परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः ।
प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम् ॥ १२ ॥
अथाहोशनसं राजन् ! हरिर्नारायणोऽन्तिके ।
आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम् ॥ १३ ॥
ब्रह्मन् सन्तनु शिष्यस्य कर्मच्छिद्रं वितन्वतः ।
यत्तत्कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवेत् ॥ १४ ॥

शुक्र उवाच ।

कुतस्तत्कर्मवैषम्यं यस्य कर्मेश्वरो भवान् ।
यज्ञेशो यज्ञपुरुषः सर्वभावेन पूजितः ॥ १५ ॥
मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।
सर्वं करोति निश्छिद्रमनुसङ्कीर्तनं तव ॥ १६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

मद्दर्शनेन यो महाह्लादस्तेन ध्वस्तं कर्मनिबन्धनमज्ञानं यस्य ॥ १०-१३ ॥

कर्मवितन्वतः शिष्यस्य यच्छिद्रमन्तरं न्यूनं जातं तत्सन्तनु विस्तारय सन्धत्स्व यजमानं विना कथं सन्धातव्यमिति न वाच्यमित्याह-यत्तदिति । ब्रह्मदृष्टं ब्राह्मणैर्दृष्टमेव समं भवेत् किम्पुनरनुष्ठितमित्यर्थः ॥ १४ ॥

भवान् यस्य सर्वेणाऽपि भावेन वस्तुमात्रेण पूजितस्तस्य कर्मसु कुतो वैषम्यम् कथम्भूतः कर्मणामीश्वरः प्रवर्तकः यज्ञेशो यज्ञफलदः यज्ञमयश्च पुरुषः ॥ १५ ॥

आस्तान्तावत् पूजा यस्मान्मन्त्रतः स्वरादिभ्रंशेन तन्त्रतो व्युत्क्रमादिना देशतः कालतश्च अर्हतः पात्रतः वस्तुतश्च दक्षिणादिना यच्छिद्रं न्यूनं तत्सर्वं तव नामाऽनुकीर्तनमात्रमेव निश्छिद्रं करोतीति ॥ १६ ॥

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

एवं विज्ञापितस्तं भगवानुवाच—वत्सेति । हे प्रह्लाद ! तव भद्रमस्तु सुतलाख्यं बिलस्थानं प्रयाहि गच्छ तत्र स्वपौत्रेण बलिनासह मोदमानः ज्ञातीनां मुदं हर्षम् प्रापय ॥ ९ ॥

तत्र सुतले नित्यं सदा अवस्थितं सन्निहितं गदा पाणौ यस्य तं मां द्रष्टासि द्रक्ष्यसि नित्यं द्रष्टासि इति वा मदनुबन्धः नित्यं मद्दर्शनेन यो महानाह्लाद आनन्दस्तेन ध्वस्तं कर्मरूपं निबन्धनं संसृतिहेतुर्यस्य तादृशो भविष्यसीति ॥ १० ॥

एवंविधां भगवत आज्ञां शिरसा बाढमित्याधायाभ्युपेत्य

श्रीमद्वीरराघवाचार्य्यकृतभागवतचन्द्रचन्द्रिका ।

हे राजन् ! अमला प्रज्ञा स्वात्मपरमात्मयाथात्म्यविषया यस्य सः प्रह्लादो बलिना सह बद्धाञ्जलिः सन् ॥ ११ ॥

आदिपुरुषं प्रदक्षिणीकृत्य प्रणतः कृतप्रणामः सर्वेषामसुराणां चमूनां सेनायाः अधिपतिर्भूत्वा तेन भगवता अनुज्ञातो महाबिलं सुतलं विवेश ॥ १२ ॥

अथ तत्प्रवेशानन्तरं हे राजन् ! भगवान्नारायणः समीपे सभायां ब्रह्मवादिनामृत्विजाम्मध्ये आसीनमुपविष्टम् उशनसं शुक्रमुवाच ॥ १३ ॥

तदेवाह—ब्रह्मन्निति । हे ब्रह्मन् ! वितन्वतो यजमानस्य शिष्यस्य बलेः यत् यज्ञस्य छिद्रं कर्मसु वैषम्यं वैगुण्यरूपं तद्ब्रह्मादृष्टं वेदबोधितं समं वैषम्यरहितमविगुणं यथाभवेत् तथा सन्तनु कुरु ॥ १४ ॥

एवमुक्तः शुक्रस्तावत्प्रकृतकर्मणि वैगुण्यमेव नास्तीति विज्ञापयन्नि—कुत इति श्लोकाभ्याम् । तस्य बलेः कर्मणो वैगुण्यं कुतः ? न कस्मादपीत्यर्थः । वैषम्याभावे हेतुमाह—यस्य येन बलिना कर्तरि षष्ठी सर्वभावेन करणभूतेन सर्वकर्मणामीश्वरः यज्ञेशः यज्ञपुरुषश्च भगवान् यतः पूजितो ऽतो न वैषम्यमित्यर्थः । कर्मेश्वरः इति सर्वकर्मप्रवर्तकत्वमुक्तं, यज्ञेश्वर इति यज्ञफलप्रदत्वं, यज्ञपुरुष इति यज्ञ शरीरकत्वं, तद्भोक्तृत्वंचेत्यपौनरुक्त्यम् ॥१५॥

किं वक्तव्यम् एतत् यत्तव पूजनम् अवैषम्यावहमिति यतस्त्वन्नामकीर्तनमेव तदावहमित्याह—मन्त्रत इति । मन्त्रतन्त्रदेशकालयोग्यवस्तुरूपो यच्छिद्रं मन्त्रादीनां यद्वैगुण्यमित्यर्थः तत्सर्वं तव नामसङ्कीर्तनमेव निश्छिद्रं करोति ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

बलिप्रह्लादयोर्भगवद्भक्तत्वेपि बलेर्बन्धनादिदुःखमभूत्सकिञ्चिन्निमित्तमिति शङ्का— ।

"बलिरप्यसुरावेशात् स्तुवन्नपि जनार्दनम् ।

आक्षिपत्यन्तरा क्वापि प्रह्लादो नित्यभक्तिमान्" ॥

इत्यनेन परिहर्तव्या । आक्षेपफलं दुःखमित्यर्थः ॥ ९—१३ ॥

कर्म वितन्वतोऽस्य यच्छिद्रं ब्रह्मभिर्ब्राह्मणैर्दृष्टं निरूपितं कर्मसु वैषम्यमन्तरायोऽपहृतिः यथासमं विहितफलप्रदत्वेन समर्थं भवेत्तथा तव शिष्यस्य बलेः कर्मणो वैषम्यलक्षणमपराधं सन्तनु परिहृतं कुरु कर्मरन्ध्रं समुन्नतं कुरु वा "छिद्रं रन्ध्रापराधयोः"इत्यभिधानं ब्रह्मणा दृष्टं वा ॥ १४ ॥

सति छिद्रे तत्परिहारस्तदेव नास्ति अस्ति चेदपि तव नामसङ्कीर्तनं निश्छिद्रं करोतीति वक्तुमुत्तानेनत्याह—शुक इति, यज्ञपुरुषो भवान्यस्य बलेः कर्मेश्वरः कुतः यज्ञेश इति अनेन सर्वयज्ञस्वामित्वं तव विद्यते किन्तुतैतद्यज्ञस्वामित्वं बलेस्तवक्रतुकत्वादिति सूचितम् । तस्य बलेः कर्मवैषम्यं कुतो हेतोः स्यादित्यन्वयः । सर्वभावेन सर्वदानेन पूजित इत्यस्याख्य ॥ १५ ॥

तवानुसङ्कीर्तनम् मन्त्रतस्तन्त्रतश्छिद्रं सर्वं देशकालोचितवस्तुतो यथा तथा निश्छिद्रं पूर्णं करोतीत्यन्वयः ॥ १६—२३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

पूर्वमेव मद्दर्शनेत्यादि स्वरूपस्त्वम् इतस्तु तत्र नित्यमेव मां द्रष्टासीत्यर्थः ॥ १०—३१ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

कर्मबन्धलक्षणः संसारस्तु मत्प्रथमदर्शनाह्लादातिशयलक्षणः एव पूर्वमेव ध्वस्त इत्याह, मद्दर्शनेति ॥ १०—१२ ॥

हरिः बलिसम्बन्धेन तस्यापराधदोषं हरतीति हरिः ॥ १४ ॥

कर्मवितन्वतः शिष्यस्य यत् छिद्रमन्तरं न्यूनं जातं तत्सन्तनु विस्तारय सन्धत्स्व यजमानं विना कथं सन्धातव्यमिति न वाच्यमित्याह—यत्तादिति । ब्रह्मदृष्टं ब्राह्मणैर्दृष्टमेव समं भवेत् किंपुनस्त्वदृष्टमित्यर्थः ॥ १४—१७ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मद्दर्शनमहाह्लादेन ध्वस्ताः कर्मनिबन्धनाः मदितरपदार्थविषयकाः रागादयो दोषा यस्य सः ॥ १०—१३ ॥

यत् कर्मसु वैषम्यं तत् यद्यपि ब्रह्मदृष्टं ब्राह्मणैर्दृष्टं समं भवेत्तथापि हे ब्रह्मन् ! कर्म वितन्वतः शिष्यस्य छिद्रं कर्मन्यूनत्वं सन्तनु पूरय ॥ १४ ॥

सर्वेण सम्पूर्णेन भावेन भक्त्या पूजितो भवान् यस्य कर्मेश्वरः कर्मणामीश्वरः कारयिता भोक्ता फलदाता च तस्य कर्मसु वैषम्यं कुतः ? न कुतोऽपीत्यर्थः ॥ १५ ॥

किंबहुना मन्त्रतः स्वरादिभ्रंशेन तन्त्रतो व्युत्क्रमादिना देशतः कालतश्च अर्हतः पात्रतश्च वस्तुतो दक्षिणादितश्च यच्छिद्रं वैषम्यं तत्सर्वं तव नामसङ्कीर्तनमेव निश्छिद्रं करोति ॥ १६ ॥ १७ ॥

---

भाषा टीका ।

श्रीभगवानुवाच ॥

श्रीभगवान बोले, कि—हे वत्स ! हे प्रह्लाद ! तुमारा मंगल हो तुम भी सुतल को जाओ और वहां अपने पौत्र के सहित ज्ञाती लोगों को सुख प्राप्त करो ॥ ९ ॥

और वहां पर अपने दरवाजे पर हमको गदा हाथ में लिये हुए देखोगे, और हमारे दर्शनके आह्लाद से तुमारे सर्व कर्म बन्धन छूटते जाँयगे ॥ १० ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—हे राजन् ! राजा बलि के सहित सर्व असुरों की सैना के पति अमल बुद्धि श्री प्रह्लादजी भगवान् की आज्ञा को शिर पर धारण कर हाथ जोड़कर आदि पुरुष को परिक्रमा देकर श्रीहरि की आज्ञा पाकर प्रणत हुए २ महाबिल ( सुतल ) में प्रवेश करते हुए ॥ ११—१२ ॥

हे राजन् ! तद नंतर श्रीहरि ब्रह्म वादियों की सभा में ऋत्विज लोगों के समीप बैठे हुए शुक्राचारीजी से बोले, कि— ॥ १३ ॥

तथाऽपि वदतो भूमन् ! करिष्याम्यनुशासनम् ।
एतच्छ्रेयः परं पुंसां यत्तवाज्ञाऽनुपालनम् ॥ १७ ॥

श्रीशुक उवाच ।

अभिनन्द्य हरेराज्ञामुशना भगवानिति ।
यज्ञच्छिद्रं समाधत्त बलेर्विप्रर्षिभिः सह ॥ १८ ॥
एवं बलेर्महीं राजन् ! भिक्षित्वा वामनो हरिः ।
ददौ भ्रात्रे महेन्द्राय त्रिदिवं यत्परैर्हृतम् ॥ १९ ॥
प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः ।
दक्षभृग्वङ्गिरोमुख्यैः कुमारेण भवेन च ॥ २० ॥
कश्यपस्याऽदितेः प्रीत्यै सर्वभूतभवाय च ।
लोकानां लोकपालानामकरोद्वामनं पतिम् ॥ २१ ॥
वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः ।
मङ्गलानां व्रतानां च कल्पं स्वर्गापवर्गयोः ॥ २२ ॥
उपेन्द्रं कल्पयाञ्चक्रे पतिं सर्वविभूतये ।
तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप ! ॥ २३ ॥
ततस्त्विन्द्रः पुरस्कृत्य देवयानेन वामनम् ।
लोकपालैर्दिवं निन्ये ब्रह्मणा चाऽनुमोदितः ॥ २४ ॥

### भाषा टीका ।

हे ब्रह्मन् ! यज्ञरूप कर्म के विस्तार करने वाले अपने शिष्य के यज्ञ में जो कुछ छिद्र रहा हो उसको पूरा करो. क्योंकि ? जो कुछ कर्म के विषय में विषमता होवे तो वह ब्राह्मण के देखने से ही सम होजाती है ॥ १४ ॥

शुक्र उवाच ॥

शुक्राचार्यजी बोले, कि—हे प्रभो ! उसके कर्म में विषमता कैसी होसकती है, जिसके कर्म के आप स्वामी हैं और जिसने यज्ञेश यज्ञ पुरुष ऐसे आपकी सर्व प्रकार पूजा करी है ॥ १५ ॥

मंत्र, तंत्र, देश, काल, पात्र, और वस्तुओं से जो कर्म में छिद्र ( न्यूनता ) भया हो तो केवल आपका नाम संकीर्तन ही सब को निश्छिद्र कर देता है ॥ १६ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

हरेराज्ञां प्रतिनन्द्य बलेर्यज्ञच्छिद्रं समाधत्त सन्धत्ते पाठान्तरे समाधाय तदाज्ञां सम्पादितवानिति शेषः ॥ १८–१९ ॥

देवाश्च ऋषयश्च भूमिपाश्च मनवस्तैः सहितः ॥ २०–२१ ॥

ननु, लोकादीनां पतिरिन्द्रोऽस्त्येव सत्यम् तथाऽपि वेदादीनां कल्पं पालने दक्षं वामनमुपेन्द्रं कल्पयाञ्चक्रे ॥ २२–२३ ॥

देवयानेन मार्गेण विमानेनेति वा ॥ २४—२७ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यद्यप्येवं नास्त्येव वैषम्यं तथापि हे भूमन् ! वदतस्तव अनुशासनं करिष्याम्येव यतस्तव आज्ञानुपालनमिति यदेतत्पुंसां परमं श्रेयः ॥ १७ ॥

इतीत्थं हरेराज्ञां प्रतिनन्द्य भगवानुशनाः शुक्रः बलेर्यज्ञस्य छिद्रमृषिभिः सह समाधत्त समादधे ॥ १८ ॥

इत्थमुपवर्णितं भगवतो वामनस्य चरित्रमुपसंहरति—एवमिति । हे महाराज ! यत्परैरपहृतं तत्त्रिदिवमित्थं बलेः सकाशाद्याचित्वा वामनरूपो हरिः भ्रात्रे महेन्द्राय ददौ ॥ १९ ॥

तदा प्रजापतिर्ब्रह्मा चतुर्मुखः देवैः ऋषिभिः पितृभिर्भूमिपैर्मनुतत्पुत्रैर्दक्षादिभिश्च सह कश्यपस्य अदितेश्च प्रीत्यै सर्व-

प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितः ।
श्रिया परमया जुष्टो मुमुदे गतसाध्वसः ॥ २५ ॥
ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप ! ।
पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये ॥ २६ ॥
सुमहत्कर्म तद्विष्णोर्गायन्तः परमाऽद्भुतम् ।
धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे ॥ २७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

भूतानां भवाय विभवाय योगक्षेमार्थं च लोकानां तत्पालकानां च पतिं वामनमकरोत् ॥ २० ॥ २१ ॥

वेदादीनां कल्पं समर्थं पालन इति शेषः । उपेन्द्रं सर्वभूतानां विभूतये पतिं कल्पयाञ्चक्रेऽकरोत् ॥ २२ ॥

तदा सर्वाणि भूतानि नितरां मुमुदिरे "मुद हर्ष" इति धातुः ॥ २३ ॥

ततो ब्रह्मणाऽनुमोदित इन्द्रो लोकपालैः सह वामनं भगवन्तं देवयानेन देववाह्ययानेन दिवं प्रतिनिन्ये प्रापयामास॥२४॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

ततः बलियज्ञशालायाः ॥ २४—२८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

समाधत्त सन्दधे समाधायेति पाठे तामाज्ञां सम्पादितवानिति शेषः ॥ १८ ॥ १९ ॥

भूमिपा मनवः ॥ २० ॥ २१ ॥

कल्पं पालने समर्थम् ॥ २२ ॥ २३ ॥

पुरस्कृत्वा अनर्घवस्त्रालङ्कारादिभिः सन्मान्य देवयानेन विमानेन देवमार्गेण वा ॥ २४—२८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इतीत्थं हरेराज्ञामभिनन्द्य बलेर्यज्ञच्छिद्रं समाधत्त सन्दधे॥१८॥

महीं यत् त्रिदिवं परैर्हृतं तच्च बलेः सकाशाद्भिक्षित्वा महेन्द्राय ददौ ॥ १९ ॥

ब्रह्मा देवादिभिः सह कश्यपस्य अदितेश्च प्रीत्यै सर्वभूतभवाय च लोकानां लोकपालानां च वामनं पतिमकरोदिति द्वयोरन्वयः । भूमिपाः मनवस्तत्पुत्राश्च ॥ २२ ॥ २१ ॥

किञ्च वेदादीनां कल्पं पालने दक्षं सर्वविभूतये पतिं तमेव वामनमुपेन्द्रं कल्पयाञ्चक्रे अकरोत् इति सार्द्धश्लोकान्वयः । मही त्रिदिवं च महेन्द्राय ददावित्युक्तत्वात् "प्राप्य त्रिभुवनं चेन्द्र उपेन्द्रभुजपालितः" इति वक्ष्यमाणत्वाच्च श्रीवामनेन त्रिभुवनपतिरिन्द्रः कृत इन्द्रस्योपरि इन्द्र उपेन्द्रः श्रीवामनः ब्रह्मणा कृत इत्यर्थः ॥ २२ ॥ २३ ॥

इन्द्रो वामनं पुरस्कृत्य कनिष्ठभ्रातृत्वेनाग्रे आरोप्य देवस्व स्वस्य यानेन रथेन गजेन वा दिवं निन्ये प्रापयामास ॥ २४ २८ ॥

---

भाषा टीका ।

हे भूमन् ! तथापि आपकी आज्ञा अवश्य करूंगा क्यों कि ? पुरुषों को आपकी आज्ञा परि पालन करना यही बड़ा श्रेयः कारी है ॥ १७ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि परमज्ञानी श्रीशुक्राचारी जी भगवान की आज्ञा का इस प्रकार अभिनन्दन कर विप्रर्षियोंके सहित बलि के यज्ञ के छिद्र का संधान करते हुए ॥ १८ ॥

हे राजन् ! श्रीहरि ने वामन रूप धारण कर इस प्रकार से राजा बलि से पृथिवी को मांगकर जो शत्रुओं ने स्वर्ग छुड़ा लिया रहा उसको फिर अपने भ्राता महेन्द्र को देदिया ॥ १९ ॥

तब मरीच्यादि प्रजापतिओं के पति श्रीब्रह्मा जी ने, देवर्षि पितृलोग और दक्ष आदिक राजा लोग तथा भृगु अंगिरा सनत्कुमार अथवा स्वामि कार्त्तिक और महादेवजी ॥ २० ॥

इन सब को साथ लेकर कश्यप और अदितिजी की प्रसन्नता के लिये तथा सम्पूर्ण प्राणियों के मंगल के लिये श्रीवामनजी को लोक और लोकपालों के पति करदिये ॥ २१ ॥

वेद, सम्पूर्ण देवता, धर्म, यश, श्री, कल्याण, व्रत, स्वर्ग, अपवर्ग [ मोक्ष ] इन सबों के पालन करने में चतुर ॥ २२ ॥

ऐसे श्रीवामनजी को सर्व समृद्धि के लिये उपेन्द्र बनाये हे राजन् ! तब सब प्राणियों को बड़ा आनन्द प्राप्त हुआ ॥ २३ ॥

तब तौ इन्द्र श्रीवामनजी को विमान में बैठाकर ब्रह्माजी के अनुमोदन से लोक पालों सहित स्वर्ग में ले गये ॥ २४ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

एतच्चरितमाख्यातमिति विधेयोस्याऽन्यान्यपि सन्तीत्युक्तम् ॥ २८ ॥

सर्वमेतन्मयाऽऽख्यातं भवतः कुलनन्दन ! ।
उरुक्रमस्य चरितं श्रोतॄणामघमोचनम् ॥ २८ ॥
पारम्महिम्न उरुविक्रमतो गृणानो यः पार्थिवानि विममे स रजांसि मर्त्यः ।
किञ्जायमान उत जात उपैति मर्त्य इत्याह मन्त्रदृगृषिः पुरुषस्य यस्य ॥ २९ ॥
य इदं देवदेवस्य हरेरद्भुतकर्मणः ।
अवताराऽनुचरितं शृण्वन्याति परां गतिम् ॥ ३० ॥
क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे ।
यत्र यत्राऽनुकीर्त्येत तत्तेषां सुकृतं विदुः ॥ ३१ ॥
इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां
वैयासिक्याम् अष्टमस्कन्धे वामनावतारचरिते
त्रयोविंशोऽध्यायः ॥ २३ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

तानि तर्हि निःशेषाणि वर्णनीयानीत्यपेक्षायामाह—पारमिति । उरु बहुधा विक्रमतो विष्णोर्महिम्नः पारं यो गृणानो भवति स मर्त्यः पार्थिवानि रजांस्यपि विममे गणितवान् यथा पार्थिव परमाणुगणनमशक्यं तथा विष्णोर्गुणगणनमप्यशक्यमित्यर्थः तथा च मन्त्रः "विष्णोर्नुकम्वीर्याणि" इति एतदेव मन्त्रान्तरार्थं सूचयन्नाह—यस्य पुरुषस्य पूर्णमहिम्नः पारं मन्त्रदृगृषिर्वसिष्ठ इति एवमाह, कथम् किञ्जायमानो जातो वा उपैति न कोऽपीति तदनन्तत्वेनैवाऽऽहेत्यर्थः । तथा च मन्त्रः "न ते विष्णो ! जायमानो न जातो देवमहिम्नः परमं तमाप" इति ॥ २९ ॥

य इदं शृण्वन् भवति स पराङ्गतिं याति ॥ ३० ॥

सुकृतं यशावत्कृतं विदुः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तत उपेन्द्रस्य भगवतः भुजपालितं त्रिभुवनं प्राप्य त्रिभुवनाधिपतिर्भूत्वा इन्द्रः निर्भयः परमया श्रिया सम्पदा जुष्टो मुमुदे ॥२५॥

ततो हे नृप ! सर्वे ब्रह्मादयो वैमानिका विमानारूढाश्च तद्विष्णोर्वामनस्य सुमहदनितरसाधारणमत एव परमाद्भुतं कर्म चरित्रं गायन्तः स्वस्वस्थानानि जग्मुः अदितिश्च शशंसिरे तुष्टुवुश्च ॥ २६ ॥ २७ ॥

हे कुरुनन्दन ! श्रोतॄणां शृण्वतां दुरितहरं सर्वमस्मद्बुद्धिगोचरमेतदुरुक्रमस्य चरितं भवतो मया कथितं सर्वं मयाऽऽख्यातमित्यनेन स्वमतिविषयं सर्वमाख्यातमित्यभिप्रेतं नतु उरुक्रममहिम्नः परिच्छिन्नत्वमित्यर्थः ॥ २८ ॥

तदेव व्यञ्जयितुं तन्महिम्नोऽनवच्छिन्नत्वमाह—पारमिति । यो मर्त्यः पुमानुरुक्रमस्य महिम्नः पारमवधिं गृणानो भवति स मर्त्यः पृथिव्या इमानि पार्थिवानि रजांसि विममे गणयेत् यथा पार्थिवानां रजसां गणना कर्तुमशक्या तथोरुक्रमस्य गुणानामपीत्यर्थः । पार्थिवानि रजांसि वा बुद्धिमान् महता कालेन गणयेत् नतु उरुक्रमस्य गुणानिति वार्थः । तथा च श्रूयते "विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इति तथा हि यस्य पुरुषस्योरुक्रमस्य महिम्नः पारं जातः जायमानो जनिष्यमाणो वा मर्त्यः उपैति किं नोपैत्येवेति*मन्त्रद्रष्टा ऋषिः वसिष्ठादिराह ॥ २९ ॥

प्रकृतावतारचरित्रश्रवणादिफलमाह—य इति । यः कश्चिदेतदद्भुतकर्मणो देवानां ब्रह्मादीनामपि देवस्य वामनस्यावतारानुचरितं शृण्वन् परां गतिं मुक्तिरूपां याति प्राप्नोति ॥ ३० ॥

यत्रयत्र देवमनुष्यपित्रादिसम्बन्धीनि क्रियमाणे कर्मणि इदमवतरानुचरितं कीर्त्येत तत्तेषां सम्बन्धि कर्म सुकृतं सुष्ठु अविगुणं यथा भवति तथा कृतं विदुस्तद्विदा इति शेषः । श्रौतस्मार्तसर्वकर्मसाद्गुण्यापादकमेतच्चरित्रश्रवणादिकमित्यर्थः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

* न ते विष्णो जातो जायमानो देव महिम्नः परमन्तमाप इति मन्त्रोऽनुसन्धेयः ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

ब्रह्मादिमहिमातिरिक्तमहिमत्वे मुरारेश्चरितस्य संसाराख्याघसङ्घातविघातदत्त्वं घटनामपि तत्कथमित्याशङ्क्य, प्रमाणपूर्वकं नद्दाह–पारं महिम्न इति। "विष्णोर्नुकम् वीर्याणि प्रवोचम्" "न ते विष्णो जायमानो न जातः" इति मन्त्रदृग्वेददृष्टा ऋषिरित्याह यस्य पुरुषस्य यो मर्त्यः पार्थिवानि रजांसि पार्थिवपरमाणून्विममे मानङ्कुरोऽप्यपिछन्दसि "व्यत्ययो बहुलम्(३।१।८५।७७")इति वचनाल्लुङर्थे लिट् जातो जायमानः उत जनिष्यमाणो वा समर्थः महिम्नः पारं समाप्तिम् उपैति किम्? नैवोपैतीत्यन्वयः। पुरुषः क इति तत्राह–मुरारेरिति। स यदुतिलक इति नेत्याह, उरुविक्रमत इति. उरु महद्यथा भवति तथेति क्रियाविशेषणं कविरत्यतिक्रान्तदर्शपीति वा ॥ २९ ॥

यस्तस्याद्भुतकर्मणो देवदेवस्य हरेरवताराऽनुचरितं शृण्वन् वर्तते स पराङ्गतिं वैकुण्ठाख्यां यातीत्यन्वयः ॥ ३० ॥

अन्यविषयकर्मसमयेऽपि कीर्त्यमानमिदं भगवत्कर्म पूर्णफलप्रदं करोतीत्याह–क्रियमाण इति । अथ मङ्गले दैवप्रभृतिकर्मणि क्रियमाणे सतीदमवताराऽनुचरितं यत्र यत्र कर्मणि कीर्त्येत तेषां पुंसां तत्तत्कर्म सुकृतं पूर्णफलदानसमर्थं विदुर्ज्ञानिन इति शेषः ॥३१॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः।

इतिश्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे
त्रयोविंशोऽध्यायः ॥२३॥

---

श्रीमद्विश्वनाथचक्रवर्त्तिकृतसारार्थदर्शिनी ।

एतत् उरुक्रमस्य चरितं सर्वं मया आ ईषदेव आख्यातं सर्वस्यैवाद्यन्तमध्यभागस्याल्पमल्पमुक्तमित्यर्थः । नन्वेतत् कथामृतं निःशेषमेव वर्णयितुमर्हसीत्यत आह–पारमिति। उरुक्रमत उरुक्रमस्य महिम्नः पारङ्गृणानो भवति स मर्त्यः पार्थिवानि रजांसि विममे यथैव पार्थिवपरमाणुगणनमशक्यं तथैव विष्णोर्गुणगणनमपीत्यर्थः । यस्य पुरुषस्य पूर्णस्य महिम्नां पारं किं जायमानो मर्त्य उत जातो वा उपैति न कोपीत्यर्थः। इति मन्त्रदृग्वसिष्ठः ऋषिराह–तथा च मन्त्रः "विष्णोर्नुकं वीर्याणि प्रवोचम्" इत्यादि. मन्त्रान्तरं च "न ते विष्णो जायमानो नजातो देवमहिम्नः परमं तमाप" इति ॥ २९ ॥

य इदं शृण्वन् भवति स परां गतिं याति ॥ ३०—३१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
अष्टमस्य त्रयोविंशः सङ्गतः सङ्गतः सताम् ॥ २३ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्मादयो विष्णोः सुमहत्कर्म गायन्तः स्वानि धिष्ण्यानि स्थानानि जग्मुरदितिं च शशंसिरे इति द्वयोरन्वयः ॥२६॥२७॥

यथामति सर्वं श्रीवामनचरितं मया तुभ्यं वर्णितं कार्त्स्न्येन तु कोऽपि न वक्तुं शक्त इत्याह–सर्वमिति द्वाभ्याम् ॥ २८ ॥

उरु बहुधा विक्रमतो विष्णोः महिम्नः पारम् अवधिं यो मर्त्यः गृणानो भवति स मर्त्यः पार्थिवानि रजांस्यपि विममे गणितवान् यथा पार्थिवरजोगणनमशक्यं तथा विष्णुगुणगणनमशक्यमित्यर्थः । मर्त्य इत्यनेन मरणधर्मः कालपरिच्छेद्यः ब्रह्मादिभिरपि त्रिविधपरिच्छेदशून्यस्य विष्णोः स्वरूपगुणादिकं साकल्येन वक्तुं नैव शक्नुयादिति सूच्यते तथा च मन्त्रः "विष्णोर्नुकं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि" इति एतदेव मन्त्रान्तरार्थं सूचयन्नाह—यस्य पुरुषस्य महिम्नः पारं जायमानः उत अथवा जातो मर्त्यः उपैति किम्? नैवोपैति इति मन्त्रदृक् ऋषिर्वसिष्ठादिराह—तथा च मन्त्रः "न ते विष्णो जायमानो, न जातो देवस्य महिम्नः परमं तमाप" इति ॥ २९ ॥

इदमवतारानुचरितं यः शृण्वन् भवति स परां गतिं याति ॥ ३० ॥

सुकृतं सुष्ठु कृतं विदुः ॥ ३१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे
त्रयोविंशाऽध्यायार्थप्रकाशः ॥ २३ ॥

---

भाषा टीका ।

उस समय इन्द्र त्रिभुवन को प्राप्त होकर श्री उपेन्द्र की भुजाओं के बल से पालित हुआ सर्व भय को छोड़कर परम श्री अर्थात् बड़ी भारी सम्पत्ति से मोद को प्राप्त होता भया ॥ २५ ॥

हे नृप! तब श्री ब्रह्माजी, श्री महादेवजी, कुमार, भृगु आदिक मुनि, पितृगण, विमानों से संचार करने वाले सिद्ध लोग तथा और सर्व प्रजा ॥ २६ ॥

श्रीविष्णु के परमाद्भुत उस त्रिविक्रमावतार के महान् कर्म को गाते हुए अपने २ गृहों को गये और अदिति की भी बहुत प्रशंसा

हे कुल नन्दन! यह उरुक्रम [ लंबी पगों वाले ] का चरित्र हमने तुमसे कहा यह चरित्र श्रोताओं को पाप से छुड़ाने वाला है ॥ २८ ॥

जो अनन्त पराक्रम वाले श्रीहरि की महिमा के पार को कथन करता है उसमनुष्य ने जानों कि पृथिवी के रजों की गणना कर लीनी। मंत्र दृष्टा ऋषि वसिष्ठ जी ने भी ऐसा कहा है, कि उत्पन्न हुआ और उत्पन्न होने वाला मनुष्य परम पुरुष की महिमा का पार पा सका है क्या? ॥ २९ ॥

भाषा टीका ।

जो पुरुष देवदेव अद्भुत कर्म्मा श्रीहरि के अवतार के चरितों को सुनता है वह सुनते२ पर गति को प्राप्त होता है ॥३०॥
देव सम्बन्धि पितृ सम्बन्धि अथवा मनुष्य सम्बन्धि कर्म करते समय पर जहाँ२ इस चरित्र का कीर्त्तन किया जाय वहाँ पर उस कर्म को विधि पूर्वक किया हुआ महात्मा जन जानते हैं ॥ ३१ ॥

इति श्रीमद्भागवत अष्टम स्कन्ध में, त्रयोविंशतितम अध्याय की श्रीवृन्दावनस्थ भागवताचार्य कृत भाषा टीका समाप्ता ॥ २३ ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

—————○:*:○—————

## ॥ चतुर्विंशोऽध्यायः ॥

—०:०:०—

### राजोवाच ।

भगवञ्छ्रोतुमिच्छामि हरेरद्भुतकर्मणः ।
अवतारकथामाद्यां मायामत्स्यविडम्बनम् ॥ १ ॥
यदर्थमदधाद्रूपं मात्स्यं लोकजुगुप्सितम् ।
तमःप्रकृतिदुर्मर्षं कर्मग्रस्त इवेश्वरः ॥ २ ॥
एतन्नो भगवन् ! सर्वं यथावद्वक्तुमर्हसि ।
उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ३ ॥

### सूत उवाच ।

इत्युक्तो विष्णुरातेन भगवान्बादरायणिः ।
उवाच चरितं विष्णोर्मत्स्यरूपेण यत्कृतम् ॥ ४ ॥

### श्रीशुक उवाच ।

गोविप्रसुरसाधूनां छन्दसामपि चेश्वरः ।
रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ ५ ॥
उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः ।
नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः ॥ ६ ॥
आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः ।
समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ॥ ७ ॥
कालेनागतनिद्रस्य धातुः शिशयिषोर्बली ।
मुखतो निःसृतान्वेदान्हयग्रीवोऽन्तिकेऽहरत् ॥ ८ ॥

---

**श्रीधरस्वामिकृतभावार्थदीपिका ।**

चतुर्विंशे प्रसङ्गेन मत्स्यरूपस्य शार्ङ्गिणः ।
लीलोच्यते यतः सत्यव्रतरक्षा महार्णवे ॥ १ ॥
तनुं तनुं विदधतोऽपि निजैश्वर्यनिदर्शनात् ।
मत्स्यं पृच्छति पृथ्वीशो लीलया वामनोपमम् ॥ २ ॥

मायया मत्स्यविडम्बनं मत्स्यरूपानुकरणं यस्यां निरूप्यते ताम् ॥ १ ॥

ननु, कस्मादकस्मादेव मत्स्यावतारप्रश्नोक्ता ? श्रीवामनसादृश्यादित्याह—यदर्थमिति द्वाभ्याम् । दुर्मर्षं दुस्सहम् ॥ २ ॥

बलेरनुग्रहाय जुगुप्सितमपि याचकरूपं कृतवानिति युक्तमुक्तं यदर्थं तु लोकजुगुप्सितं मात्स्यं रूपमधारयदेतन्नो यथावद्वक्तुमर्हसीत्यर्थः ॥ ३—४ ॥

सामान्येनावतारप्रयोजनमाह—गोविप्रेति ॥ ५ ॥

जुगुप्सितत्वं परिहरति—धियो गणैर्यान्युच्चावचानि भूतानि

श्रीधरस्वामिकृतभावार्थदीपिका ।

तेषु नियन्तृत्वेन चरन्नपीश्वरो नोच्चावचत्वं भजते निर्गुणत्वात् कुतः पुनः शुद्धसत्त्वमयैर्मत्स्याद्याकारैरुच्चावचत्वशङ्केति भावः॥६॥

विशेषतो मत्स्यावतारप्रयोजनमाह—आसीदिति त्रिभिः । ब्रह्मणो निद्रायां भवो ब्राह्मस्तेनैव निमित्तेन जातो नैमित्तिकः समुद्रे उपप्लुता निमग्ना ॥ ७ ॥

अन्तिके निःसृतान् ॥ ८ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदेवं श्रुतवामनावतारतच्चरित्रोऽवतारप्रसङ्गान्मात्स्यमवतारं शुश्रूषुः पृच्छति राजा—भगवन्निति त्रिभिः । हे भगवन् मुने ! अद्भुतकर्मणो हरेराद्यावतारकथां श्रोतुमिच्छामि, कथम्भूताम् ? माया-मत्स्यविडम्बनामद्भुतमत्स्यसजातीयचेष्टानुकारो यस्यां प्रतिपाद्य-स्तां कथाया आद्यत्वं तदवतारप्राथम्यप्रयुक्तमित्यवगन्तव्यम् ॥ १ ॥

स्वयमीश्वरोपि कर्मग्रस्तः कर्मवश्य इव जीवस्तमःस्व-भावं दुर्मर्षं क्रोध्यतएव लोकैर्जुगुप्सितं निन्दितं मात्स्यं रूपं यदर्थं यस्मै प्रयोजनाय अधात् धृतवान् ॥ २ ॥

हे भगवन् मुने ! एतत् सप्रयोजनं सर्वं मत्स्यावतारचरित्रं यथाव-द्वक्तुमर्हसि श्रोतव्यत्ववक्तव्यत्वयोर्हेतुं तच्चरित्रं विशिनष्टि-सर्वेषां लोकानां शृण्वतां वदतां च मलमघम् अपहन्तीति तथा तत् ॥३॥

इत्थमापृष्टमत्स्यावतारचरित्रो भगवान् बादरायणिर्यथावद्वर्ण-यामासेत्याह सूतः—इतीति । विष्णुरातेन परीक्षितेत्यमुक्तः पृष्टो भगवान् बादरायणिः श्रीशुको विष्णोश्चरितम् उवाच किन्तद् यन्मत्स्यरूपेण कृतम् ॥ ४ ॥

तदेवाह—यावत्समाप्ति । यदर्थमदधाद्रूपम् इति विशेषतः पृष्ट-मत्स्यावतारप्रयोजनं वक्ष्यंस्तावत्सर्वावतारसाधारणं प्रयोजनमाह-गोविप्रेति । गवां विप्राणां सुराणां साधूनां छन्दसां वेदानां तदुदितधर्ममर्यादानां च रक्षामिच्छन् धर्मार्थादिपुरुषार्थचतुष्टय-प्रदानार्थं च तनूर्मत्स्यादिमूर्तीरीश्वरो धत्ते बिभर्ति ॥ ५ ॥

यदा शङ्कितं लोकजुगुप्सितं तमःप्रकृतिदुर्मर्षमिति सावद्यत्वं तत्परिहरति-उच्चेति । उत्कृष्टेष्वपकृष्टेषु च देवमनुष्यतिर्यगादिभूतेषु चरन् तत्सजातीयजन्मकर्मादिकं कुर्वन्नपि ईश्वर उच्चावचत्वं कर्मायत्तदेवमनुष्यादितारतम्यं न भजते यथा वायुः सर्वत्र व्याप्नु-वन्नपि न व्याप्यगतधर्मैः स्पृश्यते तद्वत् अत्र हेतुं वदन्विशिनष्टि, स ईश्वरो गुणैर्हेयगुणप्रतिभटैः कल्याणगुणैर्निर्गुणत्वात्सत्त्वादि-प्राकृतगुणरहितत्वाद्धि नोच्चावचत्वं भजत इति—

> न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
> सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥

इत्युक्तरीत्या कर्ममूलकसत्त्वादिगुणत्रयसम्बन्धनिमित्तदेवमनु-ष्याद्युच्चावचत्वं सर्वजीवसाधारणं, भगवतस्तु गवादिरक्षार्थं स्वेच्छोपात्ताप्राकृतदेवमनुष्यादिसजातीयदिव्यतनोः स्वस्वभावमज-हतः कर्मायत्तदेहसम्बन्धतत्प्रयुक्तावद्यत्वं नास्तीत्यर्थः । यद्वा धिय इति छेदः धीशब्देन प्रकृतिर्लक्ष्यते तद्गुणैः सत्त्वादिभिर्हेतुभूतैः उच्चावचत्वं न भजते, कुतः ? निर्गुणत्वात् सत्त्वादिप्राकृतगुणरहि-तत्वात् निर्गुणत्वादिश्चनेन जीववत्सत्त्वादिगुणपारवश्यं निषिद्ध्यते न तु गुणनियन्तृत्वमपि तथासति "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति गुणेशत्वश्रवणविरोधापत्तेः ॥ ६ ॥

एवं सामान्यतोऽवतारप्रयोजनं तद्यथार्थ्यं चाभिधाय विशे-षतो मत्स्यावतारप्रयोजनमवतारकालं चाह—असीदिति त्रिभिः । अतीतस्यातिक्रान्तस्य कल्पस्यान्ते ऽवसाने ब्राह्मो नाम नैमि-त्तिको लय आसीत् ब्रह्मणो निद्रायां भवो ब्राह्मः तेनैव निमित्तेन जातो नैमित्तिकः तत्र तदा प्रलयकाले भूरादयः त्रयो लोकाः समुद्रे उपप्लुता निमग्ना आसन् ॥ ७ ॥

कालेन दिनावसानरूपकालेन निमित्तेनाऽऽगतनिद्रस्य सं-प्राप्तनिद्रस्यात एव शिशयिषोः शयितुमिच्छोर्धातुर्ब्रह्मणो मुखान्नि-स्सृतान् गलितान्वेदानन्तिके समीपवर्त्ती हयग्रीवाख्यो दानवेन्द्रो ऽपहृतवान् अन्तिके निस्सृतानिति वा सम्बन्धः ॥ ८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अंशिज्ञानवदंशज्ञानमपि मुक्तिसाधनं गुणाद्यविशेषादिति दर्शनाय मत्स्यावतारचरितमनुवर्णयत्यस्मिन्नध्याये, तत्र श्रुतवा-मनावतारचरितसुधापानाद्वितृष्ण इव पुनरपि राजा दशा-वतारगणनामादित्वेन मत्स्यावतारमाहात्म्यं श्रोतुं पृच्छति—राजेति, मायामत्स्यस्य विडम्बनं यस्यां सा तथा ॥ १ ॥

कथं जुगुप्सितमभूदिति तत्राह—तमःप्रकृतीति । तमः स्वभावो यस्य स तथा दुर्मर्षं सोढुमशक्यं कर्मग्रस्तो जीवः ॥ २ ॥

लोकजुगुप्सितं चेत्किमिति वक्तव्यमत्राह—उत्तमेति ॥ ३-५ ॥

ननूच्चावचेषु सुरनरादिसंज्ञेषु भोगायतनशरीरेषु वर्तमानस्य हरेरिन्द्रियगुणैरवलेपोऽपि सम्भाव्यते देवदत्तवदिति तत्राह, उच्चावचेष्विति । धीशब्देनेन्द्रियाण्युपलक्षयति ॥ ६ ॥

आदित एव वक्तुमुपक्रमते—आसीदिति । समुद्रैरुपप्लुता आप्लाविताः ॥ ७ ॥

अन्तिके विदूरतः ॥ ८—१० ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

भगवन्निति । तैः तत्र निरूप्यत इत्यध्याहारेणैव व्याख्येयं नतु विग्रहेण निरूप्यत इत्यधिकोक्तेः सापेक्षत्वाद्बहुव्रीह्यस-म्भवः ॥ १ ॥

यदर्थमिति युग्मकम् कर्मग्रस्त इव तमःप्रकृतीव दुर्मर्षं इवेत्यन्वयः । अत एव लोकैः साधारणैर्जुगुप्सितं तादृशवपु-र्धारणन्तु न युक्तमित्याह—यत उत्तमश्लोकचरितं सर्वेषा-मपि लोकानां सुखावहमेव भवितुमर्हतीति ॥ २—५ ॥

उच्चावचेषु देवमनुष्यतिर्यगादिषु भूतेषु चरन् अवतीर्य विहरन्नपि धियः साधारणबुद्धेः गुणैरुच्चावचत्वस्फुरणैरुच्चा-वचत्वं न भजते, तत्र हेतुः निर्गुणत्वात् सत्त्वाद्यतीतसच्चि-दानन्दविग्रहत्वादिति ॥ ६ ॥

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

नत्र श्रीवराहदेववद्द्वयमपि वारद्वयमवतीर्णवानिति दर्शयितुमाह—आसीदिति । अतीतकल्पस्य गतब्रह्मदिनस्य ब्राह्मो ब्रह्मशयननिबन्धनः अत एव नैमित्तिकः ॥ ७ ॥

मुखतो निःसृतान् शयनसमये आवर्त्यमानान् अन्तिके स्थित्वा योगबलेनाहरत् कल्पान्तरादौ पुनर्वेदोपदेशे लीलार्थमीश्वरेच्छा तु मूलमितिज्ञेयम् ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

चतुर्विंशे मत्स्यरूपी प्राह सत्यव्रतं हरिः ।
खेलन्महार्णवे तेन स्तुतस्तत्त्वोपदेशकः ॥
वामनस्य वियद्व्यापि वृद्धिश्रवणतः स्मृतिम् ।
आरूढो मत्स्यरूपी स पृच्छ्यते भूभृता हरिः ॥
लोके लीलया याऽऽसां कर्मस्वतिजुगुप्सिताम् ।
तथा मात्स्यं वपुर्दृष्ट्वा जातिष्वपि जुगुप्सितम् ॥
अतः प्रासङ्गिकी मत्स्यावतारस्य कथा यथा ।
तथैवाग्रतनी सत्यव्रतस्यैव प्रसङ्गतः ॥

मायामत्स्यस्य मायिकमत्स्यस्य विडम्बनम् अनुकरणं यस्यां तां स तु स्वयममायिको मत्स्य एवेत्यर्थः । स्वस्यालौकिकैः प्रभावैर्मायिकमत्स्यस्यतिरस्कारो वा ॥ १ ॥

तमःप्रकृतीव दुर्मर्षं दुःसहमित्युभयत्रापीवशब्दस्यान्वयः जुगुप्सितमपि याचकरूपं भक्तस्य बलेरनुग्रहाय धृतवानिति युक्तमुक्तं, मत्स्यरूपं तु कस्य भक्तस्यानुग्रहायेति मे जिज्ञासेति भावः उत्तमश्लोकस्य चरित्रं तु श्रवणकीर्तनाद्यर्हत्वेन सर्वलोकसुखावहं भवत्येव मत्स्यवपुर्धारणं तु कस्य भक्तस्य सुखार्थं तद्वदेति भावः ॥ २—४ ॥

सामान्येनावतारप्रयोजनमाह—गोविप्रेति ॥ ५ ॥

जुगुप्सितत्वं सामान्यतः परिहरति । धियोगुणैर्यान्युच्चावचानि रूपाणि तेषु नियन्तृत्वेन चरन्नपीश्वरो नोच्चावचत्वं भजते निर्गुणत्वात् कुतः पुनः शुद्धसत्त्वमयैर्मत्स्याद्याकारैरुच्चावचत्वमङ्क्षेति भावः इति श्रीस्वामिचरणाः ॥ ६ ॥

श्रीवराहदेववद्द्वयमपि वारद्वयमवतीर्णवानिति दर्शयितुमाह आसीदिति । ब्राह्मो ब्रह्मशयननिबन्धनः अत एव नैमित्तिकः ॥ ७ ॥

मुखतो निस्सृतान् शयनसमये आवर्त्यमानान् समीपे स्थित्वा योगबलेनाहरत् ॥ ८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

मत्स्यावतारचरित्रं वर्ण्यते मायेत्यादिना चतुर्विंशेन । मायया भक्तविषयिण्या कृपया मत्स्यविडम्बनं मत्स्यरूपानुकरणं यस्यां ताम् ॥ १ ॥

ईश्वरः कर्मग्रस्त इव जीव इव तमःप्रकृति तमःस्वभावं दुर्मर्षं क्रोधयुक्तम् अत एव लोकजुगुप्सितं मात्स्यं रूपं यदर्थं यत्प्रयोजनार्थमदधात् धृतवान् ॥ २ ॥ ३ ॥ ४ ॥

सामान्यतोऽवतारप्रयोजनमाह—गोविप्रेति ॥ ५ ॥

लोकजुगुप्सितत्वं नेत्याह—हि निश्चितं यः स्वप्रशासनविषयः ईश्वरः स गुणैर्हेतुभूतैरुच्चावचेषु भूतेषु सत्त्वादिगुणात्वात् गुणकार्येषु इत्यर्थः चरन् उच्चावचत्वं न भजते निर्गुणत्वाद्गुणकार्यानपेक्षो भूतेभ्यः विलक्षणत्वात् प्राकृतगुणरहितेन स्वासाधारणदेहेनैव देवमनुष्यतिर्यगाद्यनुकरणमात्रं करोति, न तु प्राकृतगुणमयदेवादिरूपो भवतीति फलितार्थः । यथा वायुरुच्चावचभूतपरिमितप्राणाकारः स्वेनैव रूपेण भवति नतूच्चावचत्वं भजते तद्वत् अतः स स्वासाधारणविग्रहेणैव मत्स्यः न तु तमःप्रकृति दुर्मर्षं लोकजुगुप्सितं प्राकृतं रूपं कृतवानिति निष्कर्षः ॥ ६ ॥

विशेषतो मत्स्यावतारप्रयोजनं वेदसत्यव्रतादिरक्षणज्ञानोपदेशादिकमाह—आसीदित्यादिना । ब्रह्मणो निद्रायां भवो ब्राह्मः तेनैव निमित्तेन भवो नैमित्तिकः तत्र नैमित्तिके प्रलये समुद्र उपप्लुता निमग्नाः ॥ ७ ॥

शिशयिषोः शयनं कर्तुमिच्छोः अन्तिके निस्सृतान् मूर्तिमत्तया निर्गलितान् ॥ ८ ॥

---

भाषा टीका ।

श्रीरुक्मिणीवासुदेवौ विजयेताम् ॥

राजोवाच ॥

राजा परीक्षित बोले, कि—हे भगवन् ! मैं अद्भुतकर्मा श्रीहरि के आद्य अवतार की कथा श्रवण की इच्छा करता हूं जैसे आपने मत्स्यरूप धारण कर मत्स्य का अनुकरण किया ॥ १ ॥

और लोक निन्दित मत्स्यरूप जिस प्रयोजन के लिये आपने धारण किया, साक्षात् ईश्वर होकर कर्म ग्रस्त जीव जैसे दुःसहतमोगुणी रूप को धारण करे ॥ २ ॥

हे भगवन् ! यह सब उत्तम श्लोक का सर्व लोक सुखकारी सर्व चरित्र आप यथावत् कहने के योग्य है ॥ ३ ॥

सूत उवाच ॥

सूतजी बोले, कि—इस प्रकार परीक्षित ने जब पूंछा तब भगवान् बादरायणि श्रीशुकदेवजी, हरि ने मत्स्य रूप धारण कर जो चरित्र किया सो कहने लगे ॥ ४ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—ईश्वर श्रीहरि, गौ ब्राह्मण सुरगण साधुजन वेद और धर्म के रक्षा करने के लिये अपने इच्छा से देव मनुष्यादि शरीरों को धारण करते हैं ॥ ५ ॥

यद्यपि छोटे बडे सब प्राणियों में ईश्वर वायु के सदृश सर्वत्र व्यापक होकर सबको नियमन करते हैं तथापि उन्हीं के बोध गुण से न्यारे रहते हैं क्योंकि ? निर्गुण हैं इससे प्राणियों के नीचत्व उच्चत्व के संग से आप नीचत्व उच्चत्व को प्राप्त नहीं होते हैं ॥ ६ ॥

ज्ञात्वा तद्दानवेन्द्रस्य हयग्रीवस्य चेष्टितम् ।
दधार शफरीरूपं भगवान् हरिरीश्वरः ॥ ९ ॥
तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् ।
नारायणपरोऽतप्यत्तपः स सलिलाशनः ॥ १० ॥
योऽसावस्मिन्महाकल्पे तनयः स विवस्वतः ।
श्राद्धदेव इति ख्यातो मनुत्वे हरिणाऽर्पितः ॥ ११ ॥
एकदा कृतमालायां कुर्वतो जलतर्पणम् ।
तस्याञ्जल्युदके काचिच्छफर्येकाऽभ्यपद्यत ॥ १२ ॥
सत्यव्रतोऽञ्जलिगतां सह तोयेन भारत ।
उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः ॥ १३ ॥
तमाह साऽतिकरुणं महाकारुणिकं नृपम् ।
यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल ! ।
कथं विसृजसे राजन् ! भीतामस्मिन्सरिज्जले ॥ १४ ॥
तमात्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम् ।
अजानन्रक्षणार्थाय शफर्याः स मनो दधे ॥ १५ ॥
तस्या दीनतरं वाक्यमाश्रुत्य स महीपतिः ।
कलशाप्सु निधायैनां दयालुर्निन्य आश्रमम् ॥ १६ ॥

भाषा टीका ।

हे राजन् ! अब नैमित्तिकलय में तुमसे कहता हूं सो सुनो, बीते हुए कल्प के अन्त में ब्रह्माजी के निद्रा के निमित्त से लय प्राप्त हुआ, जिसमें चारों दिशाओं के समुद्र ने भूर्लोकादिकों को डुबा लिया ॥ ७ ॥

जब समय के प्राप्त होने से ब्रह्माजी को निद्रा आई तब समीप में रहने वाला महान् बली हयग्रीव दैत्य ने मुख से निकले हुए वेदों को हरण कर लिया ॥ ८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

शफरीरूपं मत्स्यरूपम् ॥ ९ ॥

प्रयोजनान्तरं लीलाप्रकारं चाऽऽह-तत्र राजऋषिरित्यादि-यावत्समाप्ति ॥ १० ॥

स एव श्राद्धदेव इति ख्यातः ॥ ११ ॥

कृतमालायां नद्याम् ॥ १२—१७ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा दानवश्रेष्ठस्य हयग्रीवस्य तच्चेष्टितं ज्ञात्वेश्वरो हरिर्भगवान् शफरीरूपं मात्स्यं रूपं दधार हयग्रीवाख्यं दानवं निहत्य वेदान् ब्रह्मणे प्रत्यर्पयितुं मत्स्यरूपेणावततारेति विशेषतः प्रयोजनमुक्तम् शफरीति स्त्रीत्वमविवक्षितं मात्स्यरूपेणावतीर्ण इत्यर्थः ॥ ९ ॥

एवं सामान्यतो विशेषतश्चावतारप्रयोजनमभिधायावतरणप्रकारं वक्तुमितिहासं प्रस्तौति—तत्रेति । तत्र तस्मिन्नेवातीते कल्पे कश्चित्सत्यव्रताख्यो राजर्षिर्महान् अक्रोधाद्यात्मगुणयुक्तः नारायणः परः प्राप्यो यस्य तादृशो बभूव स च सलिलमेवाशनं यस्य तादृशस्तपोऽतप्यच्चचार ॥ १० ॥

सत्यव्रतं विशिनष्टि—य इति । योऽतीतकल्पे सत्यव्रताख्यो राजर्षिः स एवास्मिन्महाकल्पे विवस्वतस्तनयः श्राद्धदेव इति प्रसिद्धः मनुत्वे मनोरधिकारत्वे हरिणा भगवता अर्पितः निहितः मनुः कारित इत्यर्थः ॥ ११ ॥

एकदा कृतमालायां नद्यां जलतर्पणं कुर्वतस्तस्य सत्यव्रतस्य अञ्जल्युदके काचिदेका अल्पकाया शफरी अभ्यपद्यत अदृश्यत प्राप्तवती वा स्त्रीत्वमविवक्षितम् "इत्युक्तः सोऽनयन्मत्स्यं समुद्रे प्राक्षिपज्झषम् । क्षिप्यमाणस्तमवक्तता तमाह" इत्यादिषु पुंस्त्वनिर्देशस्य बहुलमुपलभ्यमानत्वात् ॥ १२ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो हे भारत ! द्रविडदेशाधिपः सत्यव्रतः तां शफरीमञ्जलि-गतां तोयेनाञ्जलिस्थेन सह नदीतोये तत्याज ॥ १३ ॥

तं त्यक्तवन्तं महाकारुणिकं नृपं सत्यव्रतं सा शफरी अतिकरुणं यथा भवति तथोवाच. तदेवाह-यादोभ्य इति । हे राजन् ! ज्ञातीनस्मान् घातयन्तीति तथा तेभ्यः ज्ञातयश्च ते घातिनश्च तेभ्य इति वा यादोभ्यो जलचरेभ्यो भीतामतएव दीनां मां हे दीनवत्सल ! कथमस्मिन्सरिज्जले घातुकजलचराक्रान्ते विसृजसि त्यजसि ॥ १४ ॥

इत्येवमुक्तः स राजा सत्यव्रतः आत्मनः स्वस्यानुग्रहार्थं प्रीत्या मत्स्यमूर्तिं बिभ्राणं साक्षाद्भगवन्तमजानन् शफरीरक्षणार्थं मनो दधे मनश्चक्रे ॥ १५ ॥

ततस्तस्याः शफर्याः दीनतरमुक्तं वाक्यमाकर्ण्य स महीपतिः सत्यव्रतः दयालुरेनां शफरीं कलशाप्सु कमण्डलुजले निधाय स्वाश्रमंप्रति निन्ये प्रापयामास ॥ १६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

कोऽसौ सत्यव्रत इति तत्राह, योसाविति ॥ ११—१२ ॥
अञ्जलितोयेन ॥ १३—१४ ॥
सः मनुः शफर्याः रक्षणार्थाय ॥ १५—१६ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

शफरीरूपं दधारेति । तत्र प्रलयान्ते तत् प्रकटितवानित्यर्थः अतीतप्रलयापाय इत्यादि वक्ष्यमाणात् ॥ ९ ॥

तदेवमतीतकल्पस्य वृत्तान्तमुक्त्वा साम्प्रतकल्पस्य वृत्त-माह—तत्रेति । तत्र तस्मिन् वृत्तान्ते सतीत्यर्थः ॥ १० ॥

महाकल्प इत्यनेनास्य ब्रह्मदिनरूपस्य कल्पस्यादरविशेषो दर्शितः तत्र मनोरस्य स्तुत्यर्थमिति ज्ञेयम् ॥ ११—२२ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

शफरीरूपं दधारेति तेनैव रूपेण हयग्रीवं हत्वा स्वायम्भुव-मन्वन्तरारम्भे वेदानाहरदित्यग्रिमोक्तेर्ज्ञेयं तेन मत्स्यरूपं विना वेदाहरणासम्भवात् ब्रह्मादिस्वभक्तहितार्थं मत्स्यरूपं दधारेति प्रथमो मत्स्यावतार उक्तः ॥ ९ ॥

पुनरपि मत्स्यः सत्यव्रताभिधनिजभक्तानुग्रहार्थमवतीर्ण इत्याह—तत्र मत्स्यस्वरूपे स्वदेवे भक्तिमानिति शेषः ॥ १० ॥

महाकल्पः इति दैनं दिनकल्पोऽप्ययं महाकल्पशब्देनोक्तस्तदा-त्विकसत्यव्रतमनोरादरविशेषार्थं इति सन्दर्भः एतन्महाकल्पान्तर्गत एव ब्रह्मदिने स विवस्वत्तनयो मनुर्नान्यत्रेत्यन्ये ॥ १७—१९ ॥

तं प्रसिद्धं स्वेष्टदेवं विष्णुमेव मत्स्यवपुर्धरमजानन् ॥ १७-१८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

शफरीरूपं मात्स्यं रूपं दधार धृतवान् ॥ ९ ॥
नारायणः परः उपास्यो यस्य सः ॥ १० ॥
हरिणोपास्येन अर्पितो निहितः ॥ ११ ॥
कृतमालायां नद्याम् ॥ १२ ॥ ॥ १३ ॥ ॥ १४ ॥
मत्स्यवपुर्धरं हरिमिति शेषः ॥ १५ ॥
कलशाप्सु कमण्डलुजलेषु ॥ १६ ॥ ॥ १७ ॥

---

भाषा टीका ।

उस हयग्रीव नामक दानवेन्द्र की चेष्टा को जानकर भग-वान् श्रीहरि ने शफरी [ मत्स्य ] के रूपको धारण किया ॥ ९ ॥

उस समय कोई एक नारायणपरायण सत्यव्रत नामक महान् राजर्षि जलमात्र पानकर तप करते रहे ॥ १० ॥

वह राजर्षि कौन रहे कि—जो विवस्वान् के पुत्र श्राद्धदेव नाम से प्रसिद्ध इस महाकल्प में श्रीहरि ने मनु बनाये ॥ ११ ॥

वह सत्य व्रत राजर्षि एक समय कृतमाला नदी में जल से तर्पण करते रहे, उस काल में उनके अंजली में एक छोटी सी शफरी [ मछली ] आगई ॥ १२ ॥

हे भारत ! द्रविडेश्वर राजा सत्यव्रत ने उसको जलके सहित नदी के जल में छोड दीनी ॥ १३ ॥

वह मछली परम कारुणिक राजा से बडे करुणा पूर्वक बोली, कि—हे दीन वत्सल ! जातिघातक जल जन्तुओं से डरी हुई ऐसी दीन मुझको हे राजन् इस नदी के जल में क्यों छोडते हो ? ॥ १४ ॥

अपनी रक्षा और अनुग्रह के लिये प्रीति से मीन रूप धारण करने वाले श्री हरिको न जानकर राजा ने उस मीनके रक्षा करने में चित्त लगाया १५ ॥

उन महीपति ने उस मछली का अति दीन वाक्य सुनकर परम दयालु राजा सत्यव्रत कलश के जलमें उसको डालकर अपने आश्रम में ले आये ॥ १६ ॥

सा तु तत्रैकरात्रेण वर्द्धमाना कमण्डलौ ।
अलब्ध्वात्मावकाशं वा इदमाह महीपतिम् ॥ १७ ॥
नाहं कमण्डलावस्मिन्कृच्छ्रं वस्तुमिहोत्सहे ।
कल्पयौकः सुविपुलं यत्राहं निवसे सुखम् ॥ १८ ॥
स एनां तत आदाय न्यधादौदञ्चनोदके ।
तत्र क्षिप्ता मुहूर्त्तेन हस्तत्रयमवर्द्धत ॥ १९ ॥
न म एतदलं राजन् ! सुखं वस्तुमुदञ्चनम् ।
पृथु देहि पदं मह्यं यत्त्वाऽहं शरणं गता ॥ २० ॥
तत आदाय सा राज्ञा क्षिप्ता राजन् ! सरोवरे ।
तदावृत्यात्मना तोयं महामीनोऽन्ववर्द्धत ॥ २१ ॥
नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः ।
निधेहि रक्षायोगेन ह्रदे मामविदासिनि ॥ २२ ॥
इत्युक्तः सोऽनयन्मत्स्यं तत्र तत्राविदासिनि ।
जलाशये सम्मितं तं समुद्रे प्राक्षिपज्झषम् ॥ २३ ॥
क्षिप्यमाणस्तमाहेदमिह मां मकरादयः ।
अदन्त्यतिबला वीर ! मां नेहोत्स्रष्टुमर्हसि ॥ २४ ॥

---

### श्रीधरस्वामिकृतभावार्थदीपिका ।

यत्राहं सुखं निवसामि तदोकः स्थानं कल्पय ॥ १८ ॥
औदञ्चनोदके मणिकस्थे जले ॥ १९—२१ ॥

रक्षायोगेन रक्षाया योगेनोपायेन यथा महाह्रदप्राप्तेरर्वाक् जलं विना न शुष्येयं तेनोपायेन निधेहि अविदासिनि अनुपक्षये ॥ २२ ॥

सम्मितं तत्तज्जलाशयपरिमितम् ॥ २३—२५ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततः सा शफरी तत्र कमण्डलावेकरात्रेण वर्द्धमाना सती कमण्डलोरात्मनाऽपूर्णत्वादलब्ध आत्मनः अवकाशो यया सा च महीपतिं सत्यव्रतं प्रतीदं वक्ष्यमाणमुवाच ॥ १७ ॥

तदेवाह—नेति । अस्मिन् कमण्डलावहं कृच्छ्रं सङ्कटं यथा भवति तथा वस्तुं वासं कर्त्तुं नोत्सहे अतः सुविपुलमोकः स्थानं कल्पय यत्राहं सुखं निवसामि तादृशमोकः कल्पयेत्यर्थः ॥ १८ ॥

एवमुक्तः स सत्यव्रतः ततः कमण्डलोरेनां शफरीमादायौदञ्चनोदकं विपुलकटाहोदके मणिकोदके वा न्यधान्निहितवान् तत्रौदञ्चनोदके क्षिप्ता सा शफरी मुहूर्त्तेन कालेन हस्तत्रयमवर्द्धत ॥ १९ ॥

तथा वर्द्धमाना पुनरप्याह—हे राजन् ! मे मम सुखं वस्तुम् एतदुदञ्चनं नालं न पर्याप्तं ततो मह्यं पृथु विपुलं पदं स्थानं देहि कल्पय यतः त्वामहं शरणङ्गता ॥ २० ॥

इत्युक्तेन सत्यव्रतेन तत उदञ्चनादादाय सरोवरे क्षिप्ता सती हे राजन् ! तत्सरोवरमावृत्य कृत्स्नमभिव्याप्य महामीनरूपेण व्यवर्द्धत ॥ २१ ॥

पुनस्तथा वर्द्धमान उवाच—हे राजन् ! सलिलमेवौकः स्थानं यस्य तस्य मम स्वस्तये सुखाय सुखं वस्तुमेतत्सारसं जलं नालं सलिलौकसः सरसः सम्बन्ध्येतदुदकं मम स्वस्तये न भवतीति वाऽन्वयः । अतो रक्षाय योगेनोपायेनाऽविदासिनि अनुपक्षयजले महाह्रदे रक्षां विधेहीति ॥ २२ ॥

इत्युक्तः स सत्यव्रतः तं मत्स्यमुत्तरोत्तरविपुले तत्र तत्र जलाशये अनयत्पुनस्तत्तज्जलाशयेन संमितं परिमितं तं मत्स्यं समुद्रे प्राक्षिपत् ॥ २३ ॥

समुद्रे च क्षिप्यमाणो झषः तं सत्यव्रतमिदमाह—हे वीर । इह समुद्रे मकरादयोऽतिबलाः जलचरा मामदन्ति भक्षयन्ति अतो मामिह समुद्रे त्वं हुपक्तुं नार्हसीति ॥ २४ ॥

एवं विमोहितस्तेन वदता वल्गुभारतीम् ।
तमाह को भवानस्मान्मत्स्यरूपेण मोहयन् ॥ २५ ॥
नैवं वीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि च ।
यो भवान्योजनशतमह्नाऽभिव्यानशे सरः ॥ २६ ॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अलब्धात्मावकाशमिति क्रियाविशेषणम् ॥ १७—१८ ॥

उदञ्चनं मणिकं हस्तत्रयं व्याप्तवम् ॥ १९ ॥

पदं स्थानम् ॥ २० ॥

तत्सरोवरं आत्मना शरीरेणावृत्य व्याप्य ॥ २१ ॥

अविदासिनि अगाधे अक्षिसतो वा ॥ २२ ॥

अनन्तरं किमकरोदिति तत्राह—इत्युक्त इति जलाशये धूवे असम्मितमसमानं सम्मितं समानं वा ॥ २३—२५ ॥

———

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

तमिति तस्या मनुष्यवद्वाक्यमाश्रुत्याऽपि मत्स्यत्वज्ञानं तन्माययैव विमोहितत्वात् ॥ २३—३३ ॥

———

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

औदञ्चनोदके कूपजले ॥ १९ ॥ २० ॥

तत् सरोवरं आत्मना देहेन आवृत्य ॥ २१ ॥

रक्षायोगेन जलं विना यथा न म्रियेत तथोपायेनेत्यर्थः, अविदासिनि उपक्षयशून्ये ॥ २२ ॥

तत्र जलाशयेऽवसाम्मितमप्राप्तमित्यर्थः ॥ २३—२५ ॥

———

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

कृच्छ्रं कष्टं यथा स्यात्तथाऽस्मिन्कमण्डलौ वस्तुं नोत्सहे अतः इहास्मिन्काले यथाहं सुखं निवसे निवसामि, तदोकः स्थानं कल्पय ॥ १८ ॥

औदञ्चनोदके मणिकस्थे जले ॥ १९ ॥

नालं न पर्याप्तं पृथु विपुलं पदं स्थानम् ॥ २० ॥

तत्सरोवरमात्मना देहेनावृत्य सर्वमभिव्याप्य महामीनरूपेणावर्धत ॥ २१ ॥

एतदुदकं मे स्वस्तये शान्त्यै नालम्, अतः रक्षायाः योगेनोपायेन मां अविदासिनि अनुपक्षये निधेहि ॥ २२ ॥

तस्मिंस्तस्मिन् जलाशये अनयत् पुनरसम्मितं तत्तज्जलाशयपरिमाणातीतं समुद्रं प्राक्षिपत् ॥ २३ ॥ २४ ॥ २५ ॥

———

भाषा टीका ।

वह मछली तो एक रात में बढती हुई उस कमंडल में अब काया को न प्राप्त होकर राजासे इस प्रकार बोलती हुई ॥ १७ ॥

मछली बोली, कि—मैं इस कमंडलु में दुःख पूर्वक बसना न ही चाहती हूँ मेरे लिये बडे निवास की कल्पना करो जहां कि सुख पूर्वक रहूँ ॥ १८ ॥

तब राजा ने भी कमंडलु से निकालकर उसको [ मणिक ] माठ के विषे जल में छोडदी वहां छोडने पर भी एक मुहूर्त में तीन हाथ बढ गई ॥ १९ ॥

और फिर राजा से बोली, कि—हे राजन् ! यह माठ मेरे लिये सुख पूर्वक रहने के लायक नहीं है तस्मात् मेरे लिये बडा ठिकाना बताओ क्योंकि ? मैं तुमारे शरण आई हूं ॥ २० ॥

हे राजन् ! फिर राजा सत्यव्रत ने उस पात्र में से निकाल कर सरोवर में छोडी तब उस समय पर सब जल को घेरकर बडा भारी मत्स्य बढ गया ॥ २१ ॥

और राजा से बोला, कि—हे राजन् ! जलमें रहने वाले ऐसे मेरे सुख पूर्वक रहने के योग्य यह जल नहीं है जिसमें मेरी अच्छी रक्षा होसके और जो कभी नहीं क्षीण हो ऐसे बडे हद में मुझको छोडो ॥ २२ ॥

जब राजा से इस प्रकार कहा तब वह सत्यव्रत एक से एक बडे बडे जलाशय में लेजाकर छोडने लगे, तब वह जलाशय परिमिति ही होता गया कोई भी जलाशय अधिक न हुआ तब राजा ने उस मत्स्य [ मच्छ ] को समुद्र में लेजाकर छोडा ॥ २३ ॥

समुद्र में छोडने लगे तब वह मत्स्य फिर राजा से बोला, कि हे वीर ! इसमें बडे २ मकर आदिक जंतु मेरा भक्षण करलेंगे आप मेरे को इसमें छोडने को योग्य नहीं हो ॥ २४ ॥

———

श्रीधरस्वामिकृतभावार्थदीपिका ।

अभिव्यानशेऽभितो व्याप्तवान् ॥ २६—२७ ॥

नूनं त्वं भगवान् साक्षाद्धरिर्नारायणोऽव्ययः ।
अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ २७ ॥
नमस्ते पुरुषश्रेष्ठ ! स्थित्युत्पत्त्यप्ययेश्वर ! ।
भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ! ॥ २८ ॥
सर्वे लीलावतारास्ते भूतानां भूतिहेतवः ।
ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥ २९ ॥
न तेऽरविन्दाक्ष ! पदोपसर्पणं मृषा भवेत्सर्वसुहृत्प्रियात्मनः ।
यथेतरेषां पृथगात्मनां सतामदीदृशो यद्वपुरद्भुतं हि नः ॥ ३० ॥

श्रीशुक उवाच ।

इति ब्रुवाणं नृपतिं जगत्पतिः सत्यव्रतं मत्स्यवपुर्युगक्षये ।
विहर्तुकामः प्रलयार्णवेऽब्रवी[1]च्चिकीर्षुरेकान्तजनप्रियः प्रियम् ॥ ३१ ॥

श्रीभगवानुवाच ।

सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिन्दम ! ।
निमंक्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम् ॥ ३२ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

मुख्यः सख्य आत्मा च गतिश्चाऽश्रयः ॥ २८—२९ ॥

हे अरविन्दाक्ष ! पृथगात्मनां देहाद्यभिमानिनां सतामितरेषां पदोपसर्पणं यथा मृषा भवेत्तथा सर्वसुहृत्प्रियात्मनस्तव पदोपसर्पणं मृषा न भवेत्, यद्यस्मात्त्वो भक्तानामद्भुतं वपुरदीदृशो दर्शितवानसि पाठान्तरे पृथगात्मनो भेददर्शिनः पुंसः असतां परिच्छिन्नानां पदोपसर्पणं यथा मृषेत्यर्थः ॥ ३० ॥

एकान्तजना भक्ताः प्रियाः यस्य ॥ ३१ ॥

अप्ययाम्भोधौ प्रलयार्णवे भूर्भुव आदिकमित्यर्थः ॥ ३२ ॥

---

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

इत्येवं वल्गुभारतीं सुन्दरवाचं वदता तेन मत्स्यरूपिणा भगवता विमोहितः सत्यव्रतस्तं मत्स्यमाह—को भवानित्यादिना इति ब्रुवाणमित्यतः प्राक्तनेन ग्रन्थेन । अस्मान्मत्स्यरूपेण मोहयन् भवान् क इति प्रश्नः ॥ २५ ॥

कश्चिन्मत्स्यविशेष एवाहमिति चेन्नेत्याह—नेति । एवंविधप्रभाववान् कश्चिदपि जलचरोऽस्माभिर्न दृष्टः नापि श्रुतश्च एवं वीर्यं इत्युक्तं वीर्यं दर्शयन् विशिनष्टि—य इति । यः भवान् अह्ना कालेन योजनशतमभिव्याप्तो भ्रमितो व्याप्तवान् ॥ २६ ॥

अतस्त्वं न केवलं मत्स्यः किन्त्वमरो देवः तत्रापि न ब्रह्मादिष्वमरेषु कश्चिदपि तु साक्षादव्ययः निर्विकारो भगवान् हरिर्नारायणस्त्वं नूनं निश्चितमेतदित्यर्थः । तर्हि नारायणस्य मम नैवंविध आकारः किन्तु चतुर्भुजत्वाद्याकारः इत्यत आह—अनुग्रहायेति । भूतानामनुग्रहाय देवमनुष्यादिभूतान्यनुग्रहीतुं जलौकसां मत्स्यानां रूपं धत्से मात्स्यं रूपं बिभर्षीत्यर्थः ॥ २७ ॥

कोऽसौ नारायणः ? इत्यपेक्षायां तं वक्ष्यन्नमस्करोति—नम इति । हे पुरुषोत्तम ! हे जगदुत्पत्तिस्थितिलयकारणभूत ! हे विभो ! भक्तानां प्रपन्नानां चास्माकं मुख्यः नायकोऽन्तरात्मा गतिः स्वप्राप्त्युपायभूतः "स तत्र पर्येति' स उत्तमः पुरुषः, यतो वा इमानि भूतानि जायन्ते, स कारणं करणाधिपाधिपः, य आत्मनि तिष्ठन्, अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा, अमृतस्यैष सेतुः, नित्यं विभुं सर्वगतं सुसूक्ष्मम्" इत्यादि वेदान्तवेद्यो निखिलजगदुदयविभवलयलील आत्मेश्वरः सर्वान्तर्गतः सिद्धोपायभूतः पुरुषोत्तमो यः स नारायणः स एवाधुना मत्स्यरूपेणावतीर्णः इति भावः । एवम्भूताय ते तुभ्यं नमः भक्तानां प्रपन्नानाम् इति प्रपत्त्युपकृतभक्तियोगनिष्ठानामित्युक्तम् ॥ २८ ॥

अनितरसाधारणप्रभावेन त्वं नारायण एवेति निश्चिनोमि तथा अवतारा अपि सर्वे लोकहितार्था एवेति वेद्म्येव किन्त्वेतदवतारप्रयोजनं विशेषतो ज्ञातुमिच्छामीत्याह—सर्व इति । ते तव सर्वे लीलावताराः लीलयोपात्ता अवताराः लीलावताराः लीलापदेनावता-

---

(१) चिकीर्षितं कान्तजनप्रियः प्रभुः । इति वीर०  ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

रागात्मककर्ममूलत्वमुक्तं भूतानां देवादीनां मूर्तिविभवस्तस्यैव इति सामान्यतोऽवतारप्रयोजनं जानाम्येवेति भावः । किन्तु यदर्थं यस्मै प्रयोजनविशेषाय भत एतन्मात्स्यं रूपं भगवता धृतं तत्प्रयोजनं ज्ञातुमिच्छामि ॥ २६ ॥

अनीश्वरभजनवन्मद्भजनं न मुधेति दर्शयितुमिदं मात्स्यं रूपं प्रदर्शितं भवतेति जानामीत्यभिप्रायेणाह-नेति । हे अरविन्दाक्ष ! तव पादोपसर्पणं श्रीपादारविन्दभजनं पृथगात्मनामब्रह्मात्मक-स्वतन्त्रात्माभिमानिनां सताम् इतरेषां पदोपसर्पणमिव न मृषा भवेत् न व्यर्थं भवेत्. अवैयर्थ्ये हेतुं वदन् विशिनष्टि-सर्वसुहृत्प्रियात्मनः सर्वेषां सुहृदः प्रियस्यान्तरात्मनश्च,यद्वा,सतां सर्वसुहृत्प्रियात्मन इति वान्वयः तत्पक्षे सतां साधूनां सर्वप्रकारेण सुहृत् प्रियश्च आत्मा स्वरूपं यस्य चोवेति किं एतद्विपरीतेतरेषाम् इतरेषां पादोपसर्पणं मृषेतिभावः कुत एतद्विपरीतं न मृषेत्यत आह-हि यस्माद्यदिदमद्भुतं मात्स्यं वपुर्नोऽस्माकं भजतामदीदृशः दर्शितवान् ॥ ३० ॥

इतीत्थं भाषमाणां सत्यव्रतं प्रति मत्स्यवपुर्जगदीश्वरो भगवांश्चिकीर्षितमब्रवीत् कथम्भूतः ? प्रलयार्णवे विहर्तुकामः विहारप्रयोजनं दर्शयन्विशिनष्टि कान्तजनप्रियः कान्तजनानां भक्तजनानां प्रियः प्रभुश्च भक्तजनानां प्रीतिं कर्तुमवतीर्ण इति भावः ॥ ३१ ॥

एवं पृष्टावतारप्रयोजनविशेषो मत्स्यमूर्तिर्भगवांस्तत्प्रयोजनविशेषमाह—सप्तम इति नवभिः । हे अरिन्दम ! अद्यतनादन्हः सप्तमेऽहनि मद्वतारः तस्मादह आरभ्य सप्तमेऽहनीदं भूर्भुवादिकं त्रैलोक्यमप्ययाम्भोधौ प्रलयोदधौ विनङ्क्ष्यति मग्नं भविष्यति ॥३२॥

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

एवंविधं वीर्यं यस्य सः एवं वीर्यः अह्ना झटिति व्यानशे व्याप्तः ॥ २६ ॥

विशेषसम्बन्धित्वाकारं ज्ञानं तदयनं यस्य स तथा ज्ञानाश्रयः कश्चिच्चेतन एव नारायणः किं न स्यादित्यतः साक्षाद्धरिरिति तुरीयमूर्तिः ॥ २७—२८ ॥

यदर्थं यत्प्रयोजनाय भवता आदौ मत्स्यरूपं धृतं तत्प्रयोजनपूर्वकं ज्ञातुमिच्छामीत्यन्वयः ॥ २९ ॥

अहं त्वत्स्वरूपज्ञाने योग्य इत्याह—नत इति । हे अरविन्दाक्ष ! यथा पृथगात्मनां भिन्नविषयबुद्धीनाम् इतरेषां ते तव पदोपसर्पणं मुधा वृथा भवेत्तद्वन्नैवंविन्महत्पुण्यं कर्म करोति "तद्धास्यां ततः चीयते,,इति श्रुतिरतएव पृथगित्युक्तं सतां तथा न स्यात्तत्र हेतुमाह—अदीदृश इति. तवाद्भुतं नोऽस्माकम् इतरमत्स्यविलक्षणत्वादाश्चर्यं वपुः "डुवप् बीजसन्ताने,, इति धातोः जगदुत्पादनसमर्थं रूपम् अदीदृशः दर्शितवानिति हि यस्मात्सन्त एतद्रूपज्ञाने योग्या इत्यर्थः । तव विषमस्वभावत्वाद्यथात्वमिति नेत्याह, सर्वेति ॥ ३० ॥

विषयसुखप्रेरकत्वात्प्रियः "तदेतत्प्रेयम्"इति श्रुतेः ॥ ३१ ॥

अद्यतनादह ऊर्ध्वं सप्तमे ऽहनि निमङ्क्ष्यति निमग्नं भविष्यति अप्ययाम्भोधौ प्रलयसमुद्रे ॥ ३२ ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अह्ना एकेनैव व्यानशे व्याप्तवान् ॥ २६—२८ ॥

आत्मनां गतिर्यस्मात् स मुख्यप्रभुरित्यर्थः ॥ २९ ॥

इतरेषां देवेन्द्रादीनां पृथगात्मनाम् आत्मनः पृथग्देह एव आत्मा येषां तेषां देहाध्यासवतामित्यर्थः । तव तु नास्ति देहाध्यासः देहात्मनो पार्थक्याभावादिति भावः यद्यस्मात्त्वोऽस्माकं सतां त्वद्भक्तानां निस्तारार्थम् अद्भुतमहिषं वपुरदीदृशः दर्शितवान् पृथगात्मनोऽसतामिति पाठे पृथगात्मनः पुंसः असतां पदोपसर्पणं यथा मृषेत्यर्थः ॥ ३०—३३ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

यो भवान् अह्ना अल्पेन कालेन सरः समुद्रं योजनशतम् अभिव्यानशे अभिव्याप्तवान् ॥ २६ ॥ २७ ॥

मुख्यः आत्मा आश्रयः अंशभूतस्यात्मनोऽशित्वेन स्थितिप्रवृत्तिहेतुः इत्यर्थः । गतिः पुरुषार्थप्रदश्च ॥ २८ ॥ २९ ॥

हे अरविन्दाक्ष ! पृथग्भूते त्वद्भिन्ने उपास्ये आत्मा मनो येषां तेषामितरेषामसतां यथा पदोपसर्पणं त्वद्भिन्नतत्तद्देवचरणोपासनं मृषा भवति परमपुरुषार्थदत्वाभावादिति भावः तथा सतां साधूनां पदोपसर्पणं तव चरणोपासनं मृषा न भवेत् यद्यस्मात् नोऽस्माकमुपासकानाम् अद्भुतं वपुः अदीदृशः दर्शितवानसि फलमस्माकं त्वच्चरणोपासने त्वद्वपुर्दर्शनमात्रमेवेति भावः ॥ ३० ॥

एकान्तजनाः प्रिया यस्य सः प्रियं कर्तुमिच्छुः नृपतिं प्रत्यब्रवीत् ॥ ३१ ॥

अद्यतनात् सप्तमेऽह्नि अप्ययाम्भोधौ नैमित्तिकप्रलयार्णवे निमङ्क्ष्यति निमग्नं भविष्यति ॥ ३२ ॥

भाषा टीका ।

इस प्रकार मधुरवाणी बोलने वाले उस मत्स्य ने राजा को मोहित कर दिया, तब राजा मत्स्य से बोले, कि- आप मत्स्य रूप धरकर मुझको मोह कराने वाले कौन हैं ? ॥ २५ ॥

ऐसी रीति का जलचर जंतु तो आज तक हमने न कभी देखा और न कभी सुना, जो कि-आपने सौयोजन का सरोवर एक दिन में अपने शरीर से बढकर ढँक लिया ॥ २६ ॥

यह निश्चय है कि आप साक्षात् अव्यय हरि नाम से प्रसिद्ध, नारायणही हैं । प्राणियों के अनुग्रह के निमित्त आप जल जंतुओं का रूप धारण किये हुए हैं ॥ २७ ॥

त्रिलोक्यां लीयमानायां सम्वर्ताम्भसि वै तदा ।
उपस्थास्यति नौः काचिद्विशाला त्वां मयेरिता ॥ ३३ ॥
त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च ।
सप्तर्षिभिः परिवृतः सर्वसत्त्वोपबृंहितः ॥ ३४ ॥
आरुह्य बृहतीं नावं विचरिष्यस्यविक्लवः ।
एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥ ३५ ॥
दोधूयमानां तां नावं समीरेण बलीयसा ।
उपस्थितस्य मे शृङ्गे निबध्नीहि महाऽहिना ॥ ३६ ॥
अहं त्वामृषिभिः साकं सह नावमुदन्वति ।
विकर्षन्विचरिष्यामि यावद्ब्राह्मी निशा प्रभो ! ॥ ३७ ॥
मदीयं महिमानं च परं ब्रह्मेति शब्दितम् ।
वेत्स्यस्यनुगृहीतं मे सम्प्रश्नैर्विवृतं हृदि ॥ ३८ ॥
इत्थमादिश्य राजानं हरिरन्तरधीयत ।
सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ॥ ३९ ॥
आस्तीर्य दर्भान्प्राक्कूलान्राजर्षिः प्रागुदङ्मुखः ।
निषसाद हरेः पादौ चिन्तयन्मत्स्यरूपिणः ॥ ४० ॥

भाषा टीका ।

हे पुरुषश्रेष्ठ ! हे जगत् के उत्पत्ति पालन नाश करने वाले ईश्वर ! हे विभो ! हमारे सदृश प्रपन्न भक्तजनों के आत्मा और मुख्य गति आप ही हो ॥ २८ ॥

सर्व आपके लीलावतार, प्राणियों के वृद्धि के हेतु हैं । पर मैं यह जानने की इच्छा करता हूं कि-यह, रूप आपने कौन प्रयोजन के लिये धारण किया है ॥ २९ ॥

हे अरविन्दाक्ष ! सर्व लोगों के सुहृत प्रिय और आत्मा ऐसे आपके चरणों के शरण में आना व्यर्थ नहीं होता है । जैसा कि इतर पृथक् देहात्माभिमानी बहिर्मुख जनों का व्यर्थ होता है क्यों कि-आपने तो मुझको अति अद्भुत रूप से दर्शन दिया है ॥ ३० ॥

श्रीशुक उवाच ।

श्रीशुकदेव जी बोले,कि—उस युग के क्षय काल में ऐसे कहने वाले सत्यव्रत राजा को मत्स्य रूपधारी श्रीहरि बोले, कैसे आप हैं; कि उस प्रलय काल के समुद्र में विहार की कामना वाले, और परमैकान्ती जनों के प्रिय हैं इसी से अपने भक्त के प्रिय करने की इच्छा वाले हैं ॥ ३१ ॥



श्रीभगवान् उवाच ।

श्रीभगवान् बोले, कि-हे अरिन्दम ! आज से सातवें दिन में प्रलय के समुद्र में भूः भुव आदिक त्रिलोकी डूब जायगी ॥ ३२ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

सम्वर्ताम्भसि प्रलयोदके त्वामुपस्थास्यति प्राप्स्यति ॥ ३३ ॥
ओषधीः आदायेति शेषः ॥ ३४ ॥

ऋषीणामेवालोकेन विचरिष्यसि ॥ ३५ ॥]

महाहिना वासुकिना ॥ ३६—३७ ॥

मे मयाऽनुगृहीतं प्रसादीकृतं हृदि अपरोक्षं वेत्स्यसि त्वया कृतैः सम्प्रश्नैर्मया विवृतं प्रकाशितं सन्तम् ॥ ३८—४४ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

संवर्ताऽम्भसि प्रलयोदके त्रिलोक्यां लीयमानायां सत्यां तदा काचिन्मयेरिता प्रेरिता उपकल्पिता विशाला विपुला नौः नौका त्वामुपस्थास्यति त्वत्समीपे स्थास्यतीत्यर्थः ॥ ३३॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

तदा त्वं सर्वा ओषधीर्बीजानि च नानाविधानि नाव्यारोप्येतिशेषः । सप्तर्षिभिः सहितः सर्वैः सत्त्वैर्जन्तुभिरुपबृंहितः उपश्लिष्टः ॥ ३४ ॥

बृहतीं विपुलां नावमारुह्याविक्लवः दैन्यरहितः विचरिष्यसि निरालोके सूर्याद्यालोकरहिते एकार्णवे ऋषीणां वर्चसैवोपलक्षिताम् ॥ ३५ ॥

बलीयसा प्रचण्डेन समीरेण प्रलयवायुना दोधूयमानां नितरां कम्पमानां तां महतीं नावमुपस्थितस्य सन्निहितस्य मम शृङ्गे वासुकिना सर्पेण उपस्थितेनेति शेषः । तेन बन्धनेन साधनेन निबध्नीहि ॥ ३६ ॥

तदाऽहमुदन्वति प्रलयार्णवे ऋषिसहितां महतीं नावं विकर्षन् यावद्ब्रह्मणश्चतुर्मुखस्येयं ब्राह्मी निशा रात्रिः प्रवर्तते तावद्विचरिष्यामि ॥ ३७ ॥

परं ब्रह्मेति शब्दितं परब्रह्मशब्दाऽभिहितं मदीयं महिमानं च वेत्स्यसि महिम्नः ब्रह्मशब्दवाच्यत्वं तस्य ब्रह्मशब्दप्रवृत्तिनिमित्ताश्रयत्वेन निरतिशयबृहत्त्वं हि ब्रह्मशब्दार्थः, कथम्भूतम् ? मयानुगृहीतं मयोपदिष्टमित्यर्थः । संप्रश्नैस्त्वत्कृतैर्हृदि विवृतम् । अत्र केचिद्व्याचक्षते, ( अत्रोक्तः प्रलयः किं महाप्रलयः ? उत दैनन्दिनो वेति ? तत्र तावद्ब्रह्मलोकलय इति " यो सावस्मिन्महाकल्पे" इति चोक्तेर्महाप्रलय इति तावत्प्राप्तं नेति ब्रूमः महाप्रलये पृथिव्यादीनामवशेषासंभवात् यावद्ब्राह्मी निशेत्याद्युक्तिविरोधाच्चातो दैनं दिन इति युक्तं नचैतदपि सङ्गच्छते सांवर्तकैरनावृष्ट्यादिभिर्विनाऽकस्मादेव सप्तमेऽहनि त्रैलोक्यं निमङ्क्ष्यतीति मत्स्योक्तेरनुपपत्तेः यच्चोक्तं प्रथमस्कन्धे—

"रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे ।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम्" ॥

इति तदपि तदा दुर्घटं नहि प्रलयद्वयेऽपि महीमय्यां नाव्यारोहः सम्भवति न च चाक्षुषमन्वन्तरे प्रलयोऽस्ति तथा च सति सप्तमो मनुर्वैवस्वत इत्यपि दुर्घटं स्यात् "त्वं तावदोषधीः सर्वाः" इत्यादि निर्देशोपि न सङ्गच्छते न हि तदा ओषध्यादीनां सत्वानां चावशेषः संभवति तस्मादन्यथा वर्ण्यते नैवायं वास्तवः कोपि प्रलयः किन्तु सत्यव्रतस्य ज्ञानोपदेशायाविर्भूतो भगवान्वैराग्यार्थमकस्मात्प्रलयमिव दर्शयामास यथा अस्मिन्नेव वैवस्वतमन्वन्तरे मार्कण्डेयाय दर्शितवान् तदपेक्षयैव च महाकल्पेऽस्मिन्निति विशेषणं सङ्गच्छते तथा च "ततः समुद्र उद्वेलः सर्वतः समदृश्यत" इति तस्यैव तथादर्शनमुक्तमित्येषा दिगिति. ) अत्रेदं वक्तव्यं यदि वैराग्यजननद्वारा ज्ञानोपदेशार्थमाविर्भूतो भगवान् वैराग्यार्थं सत्यव्रतायैवाकस्मात्प्रलयदर्शनं तर्हि "आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः" इत्यादेः "कालेनागतनिद्रस्य धातोः शिशयिषोर्बली मुखतो निःसृतान्वेदान्" इत्यादेश्च अवतारकालप्रदर्शनपरस्यावतारप्रयोजनप्रदर्शनपरस्य चोपक्रमस्य ग्रन्थस्यासाङ्गत्यापत्तेः तत्र "कालेनागतनिद्रस्य धातुः शिशयिषोः" इति स्वरसतः सुव्यक्तं दैनन्दिनप्रलयावगमात्सत्यव्रतस्यैव प्रलयप्रदर्शने हयग्रीवाख्यासुरेण वेदापहारस्य कथनानुपपत्तेश्च तत्र राजर्षिः कश्चिदित्यादिनातीतकल्पे सत्यव्रतस्य सतः पुनस्तस्मिन्कल्पे "योसावस्मिन्महाकल्पे" इत्यादिना वैवस्वतमनुत्वकरणकथनानुपपत्तेश्च न हि चाक्षुषपत्रमन्वन्तरं सत्यव्रतत्वेनावस्थितस्य तस्मिन्नेव मन्वन्तरे वैवस्वतमनुत्वेन अवस्थानकथनमुपपन्नम् नहि सत्यव्रतस्याऽकस्मात् प्रलयप्रदर्शनमात्रेण धातुश्शिशयिषोर्मुखतो वेदानां निस्सृतिरसुरेण तदपहृतिश्च सम्भवति तस्मादतीतदैनन्दिनकल्पाऽवसानिक एव प्रलयोऽत्र विवक्षितः न च श्रीमत्स्योक्तिविरोधः सांवर्तकानाम् अनावृष्ट्यादीनां शब्दतोऽनुपात्तानामप्यर्थतोऽत्र विवक्षितत्वात्माभूद्वा कल्पविशेषावसाने अनावृष्टिः वृष्टिस्तु "वर्द्धमानो महामेघैर्वर्षद्भिः समदृश्यत" इत्युक्तैव न च प्रथमस्कन्धवचनस्य दौर्घट्यं दैनं दिनकल्पविशेषाऽवसाने महीमय्यां नाव्योषध्यादीनामारोपसंभवात् चाक्षुषान्तरशब्देन चाक्षुषमन्वन्तरयुक्तो वर्तमानो दैनन्दिनकल्पो लक्ष्यते तस्मात्प्राक्तनो यः संप्लवः अतीतकल्पाऽवसानिकस्तस्मिन्नाव्यारोप्येत्यर्थः । न चौषधादीनामवशेषासम्भवः तद्विशेषस्यैतत् ग्रन्थादेवावगमात्कल्पविशेषे तदवशेषोपपत्तेश्चेति ॥ ३८ ॥

एवं राजानं सत्यव्रतमाज्ञाप्य हरिर्मत्स्यरूपस्तत्रैवान्तर्हितवान् ततः सत्यव्रतो यं कालं हृषीकेशो मत्स्यमूर्तिरादिशत् "सप्तमेद्यतनादूर्ध्वमहन्येतदरिन्दम! " इति निर्दिष्टवान् तमेव कालम् अन्ववैक्षत प्रतीक्षितवान् ॥ ३९ ॥

राजर्षिः सत्यव्रतः दर्भान्प्रागग्रानास्तीर्य तेषु प्रागुदङ्मुखः ईशान्याभिमुखो निषसाद उपविष्टवान् कथम्भूतस्सन् श्रीमत्स्यरूपिणो हरेर्भगवतः श्रीपादौ चिन्तयन्, ॥ ४० ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

सम्प्लवताम्भसि प्रलयजले उपस्थास्यति समीपमागमिष्यति ॥ ३३ ॥

सर्वैः सत्वैः प्राणिभिः उपबृंहितः पूरितः ॥ ३४ ॥

निरालोके तमःप्राये ऋषीणां वर्चसा प्रकाशेनैव नाऽन्येन ॥ ३५ ॥

दोधूयमानाम् इतस्ततोऽत्यन्तं कम्पमानां निबध्नीहि निबन्धनमहाऽहिना पाशेन ॥ ३६ ॥

ब्राह्मी ब्रह्मसम्बन्धिनी ॥ ३७ ॥

तव सम्यक् प्रश्नैः हृदि विवृतं स्पष्टीकृतं मयाऽनुगृहीतं मदीयं ब्रह्मेति शब्दितं महिमानं ज्ञास्यसि ॥ ३८ ॥

अन्ववैक्षत प्रतीक्ष्याऽऽस्थितः ॥ ३९—४२ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

स्थमिति युग्मकम् सर्वसत्त्वैश्चान्यैः सूक्ष्मरूपैरपेक्षितैरुपबृंहितः ॥ ३४–४० ॥

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी।

ओषधीरादायेति शेषः। सर्वैरमरस्वैर्मुख्यमुख्यप्राणिभिः सपरिकरमनुकश्यपादिभिरुपबृंहितः वर्द्धितमहत्त्वस्सन् ऋषीणां वर्चसा तेजसैव विचरिष्यसि ॥ ३४—३५ ॥

मे मत्स्यरूपस्येत्यर्थः। महाऽहिना वासुकिना ॥ ३६ ॥

ब्राह्मी निशेति यद्यप्ययं ब्रह्मदिनगतचाक्षुषमन्वन्तरमध्य एव भगवदिच्छयैवाकस्मिकप्रलयोऽभूत् तदपि त्रैलोक्यमज्जनात् दैनंदिनप्रलयसाम्यदृष्ट्या भगवत्क्रीडेच्छामनुस्मृत्य निर्व्याकुलो ब्रह्मापि कञ्चित् कालं सुष्वाप तदनुसारेणैव गौण्या वृत्त्या ब्राह्मी निशेत्युक्तमिति भागवतामृतव्याख्यानुसारी सन्दर्भः। तच्च भागवतामृतं यथा "मध्ये मन्वन्तरस्यैव मुनेः शापान्मनुं प्रति। प्रलयोऽसौ बभूवेति पुराणे क्वचिदीर्यते॥ अयमाकस्मिको जातश्चाक्षुषस्यान्तरे मनोः। प्रलयः पद्मनाभस्य लीलयैवेति कुत्रचित्" इति किञ्च दक्षस्य मानसकायिकप्रजासृष्ट्यान्यथाऽनुपपत्त्येव प्रलयोऽयमवश्यमन्तव्य एव यदुक्तं चतुर्थे—

"चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविप्लुते।
यः ससर्ज प्रजा इष्टाः स दक्षः कालचोदितः" ॥

इति प्रलयस्य चातुर्विध्यमपि नाऽनुपपन्नम् अस्य क्षुद्रप्रलयस्य नैमित्तिक एवान्तर्भावात् अत एव पृथिव्युद्धरणहिरण्याक्षवधावपि श्रीवराहदेवेन चाक्षुषप्रलयान्त एव स्वायम्भुवमन्वन्तरारम्भे पृथिव्युद्धरणे हिरण्याक्षस्य सम्भवाभावात्। यदुक्तं तत्रैव "उत्तानपदवंश्यानां तनयेऽस्य प्रचेतसां। दक्षस्यैव दितेः पुत्रौ हिरण्याक्षो दितेः सुतः ॥ कल्पारम्भे तदानास्ति सुतोत्पत्ति मनोरपि। क्वासौ प्राचेतसो दक्षः क दितिः क दितेःसुतः॥ अतः कालद्वयोद्भूतं श्रीवराहस्य चेष्टितम् एकत्रैवाह मैत्रेयः वक्तुः प्रश्नानुसारतः" इति एवमिहापि कालद्वयोद्भूतं मत्स्यचेष्टितं स्पष्टमविविच्य खल्वेकीकृत्यैवाह—श्रीमन्मुनीन्द्रः वस्तुतस्तु "आसीदतीतकल्पान्ते" इत्यादिनोक्ता या शफरी वेदानयनार्था सा ऽन्या सत्यव्रताञ्जलिगता तु चाक्षुषमन्वन्तरीया अन्यैवेति ज्ञेयं. श्रीसूतस्तु चाक्षुषीयमत्स्यमेवावतारगणमध्ये गणितवान् तथाहि "रूपं स जगृहे मात्स्यं चाक्षुषोदधिसंप्लवे ॥ नाव्यारोप्य महीमय्या मपाद्वैवस्वतं मनुम्" इति श्रीस्वामिचरणास्तु अत्रेदं चिन्त्यमित्युक्त्वा ब्राह्मो लय इति योऽसावस्मिन्महाकल्प इति चोक्तेरयं महाप्रलयश्चेन्महाप्रलये पृथिव्यादीनामवशेषासम्भवात् यावद्ब्राह्मी निशेत्युक्तेरयं दैनन्दिनएवेति चेन्न सांवर्त्तकैरनावृष्ट्यादिभिर्विना अकस्मादेव सप्तमेऽहनि त्रैलोक्यं निमङ्क्ष्यतीति मत्स्योक्तेरनुपपत्तेः तस्मात् सत्यव्रतस्य ज्ञानाद्युपदेशार्थमाविर्भूतो भगवान् वैराग्यार्थं माययैव मार्कण्डेयमिव तं प्रलयं दर्शयामासेत्याहुः ॥ ३७ ॥

अथ प्रकृतमनुसरामः किञ्चात्मारामगणसङ्गिनस्तव हृदि ब्रह्माऽनुबुभूषा जागर्त्ति सापि मत्कृपयैव सफला भविष्यतीत्याह, मदीयमिति ध्वनितं ब्रह्मशब्दसङ्केतितं मदीयं महिमानं महतो मम यो महिमा एको धर्मस्तं ममैव व्यापकं निर्विशेषस्वरूपं वेत्स्यसि अनुभविष्यसि मे मया अनुगृहीतं तुभ्यं प्रसादीकृत्य दत्तमित्यर्थः। ब्रह्मस्वरूपस्य मदीयत्वेन मया दातुं शक्यत्वादेव तदर्थं तव पृथक् ज्ञानादि प्रयासेनालमिति भावः। केन प्रकारेणानुगृहीष्यसीत्यत आह—सत्प्रश्नैस्त्वया कृतैस्त्वत्प्रत्युत्तरत्वेन तव हृदि हृदये विवृतं विवृतीकृत्य मयैवानिर्देश्यमपि तद्बलात् ग्राहितमित्यर्थः विषयग्रहणार्थं जीवेभ्यो यथा बुद्धीन्द्रियादिसृष्ट्वा दत्तवानस्मि तथैव ब्रह्मस्वरूपग्रहणार्थमपि किमपि स्वसामर्थ्यं तुभ्यं कृपया दास्यामीति भावः ॥ ३८ ॥ ३९ ॥

प्रागुत्तरयोरन्तराले मुखं यस्य सः ॥ ४०—४४ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः।

संवर्त्ताम्भसि नैमित्तिकप्रलयजले मयेरिता मया प्रवर्तिता त्वामुपस्थास्यति प्राप्स्यति ॥ ३३ ॥

ओषधीर्बीजानि चादायेति शेषः ॥ ३४ ॥

निरालोके कथं विचरिष्यामीत्यत्राह—ऋषीणामेव वर्चसेति ॥ ३५ ॥

दोधूयमानां कम्पमानाम् ॥ ३६ ॥

ब्राह्मी ब्रह्मणश्चतुराननस्येयं ब्राह्मी यावद्ब्रह्मणः सहस्रचतुर्युगपरिमिता निशा तावद्वर्षाभिः साकं सह नावं त्वां विकर्षन् उदन्वति विचरिष्यामि पूर्वकल्पान्ते सत्यव्रतौषधिबीजमहर्षिरक्षार्थं हयग्रीवापनीतवेदानयनार्थं च मत्स्यावतारो जातस्तदनन्तरं नैमित्तिकः प्रलयोऽभूदित्यर्थः "आसीदतीतकल्पान्ते ब्राह्मो नैमित्तिको लयः" इत्यारभ्य यावद्ब्राह्मी निशेत्यन्तेन ग्रन्थेनोक्तमर्थमनादृत्य मायावादिना यदुक्तं नचायं वास्तवः कोपि प्रलयः किन्तु सत्यव्रतस्य ज्ञानोपदेशाय आविर्भूतो भगवान् वैराग्यार्थमकस्मात्प्रलयमिव दर्शयामासेति तदसत्, निर्मूलत्वात् नच सांवर्त्तकानामनावृष्ट्यादीनामभावात्कथं नैमित्तिकः प्रलय इति वाच्यम् "सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिन्दम। निमङ्क्ष्यत्यप्ययाम्भोधौ" इत्यादे रेकदेशकथनमात्रेण सर्वस्यानावृष्ट्यादेः सूचितत्वात् नच "रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे। नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम्" इति प्रथमस्कन्धोक्तं दुर्घटम् स भगवान् मात्स्यं रूपं जगृहे अतीतकल्पान्ते इति शेषः अन्यथा "आसीदतीतकल्पान्ते" इत्याद्यष्टमेन "योऽसौ सत्यव्रतो नामराजर्षिर्द्रविडेश्वरः। ज्ञानं ह्यतीतकल्पान्ते लेभे पुरुषसेवया" इति नवमेन च स्कन्धेन विरोधः स्यात् चाक्षुषान्तरस्य षष्ठस्य समाप्तित्वेऽस्मिन् सति जायमानं वैवस्वतं मनुं पूर्वमेव नाव्यारोप्य प्रलयोदयादित्यन्वयात् चाक्षुषोदधिसम्प्लवे इति प्रथमस्कन्धे पाठः ॥ ३७ ॥

मदीयं महिमा परब्रह्मेति शब्दितं सत्प्रश्नैस्त्वत्कृतैः सम्यक् प्रश्नैः मया विवृतं प्रकाशितं न केवलं त्वत्प्रश्नानुरोधेनैव प्रकाशितं किन्तु मे मयापि अनुगृहीतम् अनुग्रहार्थमुपदिष्टम् मन्वन्तरस्य सम्प्लवं त्वं वेत्स्यसि। ननु, ब्रह्मशब्दस्य भगवद्वाचकस्य तन्महिमापरत्वं कुतः? इत्यत्रेदं वक्तव्यम् यथा महदाद्यपेक्षया प्रकृतौ बृहत्तमायां भगवच्छक्तिभूतायां ब्रह्मशब्दप्रयोगः भगवद्गीतायां प्रसिद्धः "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम्" इति तथा सर्वलोकापेक्षया बृहत्तमे भगवल्लोके

ततः समुद्र उद्वेलः सर्वतः प्लावयन्महीम् ।
वर्द्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ४१ ॥
ध्यायन्भगवदादेशं ददृशे नावमागताम् ।
तामारुरोह विप्रेन्द्रैरादायौषधिवीरुधः ॥ ४२ ॥
तमूचुर्मुनयः प्रीता राजन् ! ध्यायस्व केशवम् ।
स वै नः सङ्कटादस्मादविता शं विधास्यति ॥ ४३ ॥
सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे ।
एकशृङ्गधरो मत्स्यो हैमो नियुतयोजनः ॥ ४४ ॥
निबध्य नावं तच्छृङ्गे यथोक्तो हरिणा पुरा ।
वरत्रेणाऽहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ४५ ॥

राजोवाच ।

अनाद्यविद्योपहतात्मसम्विदस्तन्मूलसंसारपरिश्रमातुराः ।
यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥ ४६ ॥
जनोऽबुधोऽयं निजकर्मबन्धनः सुखेच्छया कर्म समीहतेऽसुखम् ।
यत्सेवया तां विधुनोत्यसन्मतिं ग्रन्थिं स भिन्द्याद्धृदयं स नो गुरुः ॥ ४७ ॥
यत्सेवयाऽग्नेरिव रुद्ररोदनं पुमान्विजह्यान्मलमात्मनस्तमः ।
भजेत वर्णं निजमेष सोऽव्ययो भूयात्स ईशः परमो गुरोर्गुरुः ॥ ४८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

ब्रह्मशब्दप्रयोगो वनपर्वणि प्रसिद्धः "ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम् । शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदुः" इति एवं चतुर्मुखादौ ब्रह्मशब्दप्रवृत्तिः तथा भगवदीयमहिम्नो निरतिशयबृहत्त्वेन ब्रह्मशब्दत्वमिति ॥ ३८—४४ ॥

भाषा टीका ।

प्रलय के जल में त्रिलोकी डूबने के समय हमारी प्रेरणा से तुम को एक बडी भारी नौका उपस्थित होगी ॥ ३३ ॥

तब तुम सर्व औषधि और ऊँचे नीचे सर्व बीजों को लेकर सप्त ऋषियों के साथ और सर्व जन्तुओं सहित ॥ ३४ ॥

उस बडी भारी नौका पर बैठ कर अविक्लव होकर आनन्द से विचरोगे। जब सब जगत् एकार्णव होजायगा और अन्धकार से व्याप्त होजायगा तब तुमारी नौका में बैठे हुए जो सप्त ऋषि है उनके प्रकाश से ही विचरोगे ॥ ३५ ॥

और उस समय बडे बलवान् पवन से अत्यन्त ही हल चल होने वाली उस नौका को जब मैं तुम्हारे समीप आकर उपस्थित होजाऊँ तब वासुकी सर्प से मेरे शृङ्ग में बांध देना ॥ ३६ ॥

हे प्रभो ! राजन् ! ऋषियों सहित और तुमारे सहित उस नौका को हम समुद्र में खींचते हुए जब तक ब्रह्मा की रात्रि रहेगी तब तक विचरेंगे ॥ ३७ ॥

और जो परब्रह्म शब्द से कही जाय उस हमारी महिमा को तुम प्रश्नों से अपने हृदय में हमारे अनुग्रह से जानोगे ॥ ३८ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

वरत्रेण दोरकरूपेण ॥ ४५ ॥

सागरं तारयिष्यन्तं तरिष्यन्निव सागरम् ।
सत्यव्रतो गुरुत्वेन तुष्टाव हरिमष्टभिः ॥

अत्रेदं चिन्त्यम् किमयं महाप्रलयो दैनं दिनो वेति तत्र तावत् ब्राह्मो लय इति योऽसावस्मिन्महाकल्पे इति चोक्तेर्महाप्रलय इति प्राप्तम्, नेति ब्रूमः महाप्रलये पृथिव्यादीनामवशेषासम्भवात् यावद्ब्रह्मनिशेत्याद्युक्तिविरोधाच्च अतो दैनं दिन इति युक्तम्

### श्रीधरस्वामिकृतभावार्थदीपिका ।

न चैतदपि सङ्गच्छते सांवर्तकैरनावृष्ट्यादिभिर्विना अकस्मादेव सप्तमेऽहनि त्रैलोक्यं निमङ्क्ष्यतीति मत्स्योक्तेरनुपपत्तेः यच्चोक्तं प्रथमस्कन्धे–

रूपं स जगृहे मात्स्यं चाक्षुषान्तरसंप्लवे ।
नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥

इति तदपि तदा दुर्घटम् नहि प्रलयद्वयेऽपि महीमय्यां नाव्यारोहः सम्भवति नच चाक्षुषमन्वन्तरे प्रलयोऽस्ति तथा च सति सप्तमो मनुर्वैवस्वत इत्यपि दुर्घटं स्यात् एवं तावदोषधीः सर्वा इत्यादिनिर्देशोऽपि न सङ्गच्छते नहि तदा ओषध्यादीनां सत्त्वानाञ्चावशेषः सम्भवति तस्मादन्यथा वर्ण्यते नैवायं वास्तवः कोपि प्रलयः किन्तु सत्यव्रतस्य ज्ञानोपदेशायाविर्भूतो भगवान्वैराग्यार्थमकस्मात्प्रलयमिव दर्शयामास यथाऽस्मिन्नेव वैवस्वतमन्वन्तरे मार्कण्डेयाय दर्शितवान् तदपेक्षयैव महाकल्पेऽस्मिन्निति विशेषणं सङ्गच्छते तथा च "ततः समुद्र उद्वेलः सर्वतः समदृश्यत" इति तस्यैव तथा दर्शनमुक्तमित्येषा दिक्, प्रस्तुतं स्तोत्रं व्याख्यास्यामः तत्र नानायोनिषु संसरतः स्वस्य भगवत्कृपयैव तत्प्राप्तिं दृष्ट्वा मुक्तये तमेव प्रार्थयते–अनादिर्याऽविद्या तयोपहता आवृताऽऽत्मनः संविद्येषां तेऽत एवाविद्यामूलः संसारपरिश्रमैरातुरा इह संसारे यदृच्छया यदनुग्रहादेवोपसृता आश्रिताः सन्तो यमाप्नुयुः प्राप्नुवन्ति स भवानेव साक्षान्नो गुरुः सन् ग्रन्थिं भिन्द्यादित्युत्तरेणान्वयः॥ ४६॥

ननु, वैराग्यं विना कुतो मुक्तिः ? तर्हि तस्य त्वत्सेवैकफलत्वात्सेवामादिशेत्याशयेनाह—जन इति । अबुधोऽयं जन असुखं यथा भवति तथा कर्म समीहते तां सुखेच्छाम् नो हृदयरूपं ग्रन्थिं स भिन्द्यात् यतः स एव परमो गुरुः ॥ ४७ ॥

ननु, यज्ञदानादिभिः सत्त्वशुद्धिं विना कथं ग्रन्थिभेदः स्यात् ? तत्राह—यत्सेवयेति । यस्य सेवयैव पुमानात्मनो मनसो मलं तमो विजह्यात् एष हीनमलो निजं वर्णं च स्वरूपं भजेत् स ईशो नो गुरुर्भूयात् यतः स एव गुरोरपि परमो गुरुः मलहीने दृष्टान्तः रुद्ररोदनं रुद्रस्य रोदनं रजतम् 'यद्रोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रवसियततद्रजतं हिरण्यमभवत्" इतिश्रुतेः तद्यथाग्नेः सम्पर्कान्मलं जहाति स्वं वर्णं भजते नतु क्षालनादिभिस्तथा न यज्ञादिभिर्मलत्यागः किन्तु त्वत्सेवयैव तेषान्तु सेवाङ्गत्वमिति भावः ॥ ४८ ॥

---

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततस्तमेवं सत्यव्रते चिन्तयति सति वर्षद्भिर्महामेघैर्वर्धमानः समुद्रः उद्वेलः मर्यादातिगः सर्वतो महीं प्लावयन् निमज्जयन् समदृश्यत सत्यव्रतेनेति शेषः ॥ ४१ ॥

तदा सत्यव्रतः श्रीभगवतो मत्स्यरूपिण आदेशं ध्यायन् सन्निहितां नावं दृष्टवान् तत्र ओषधीर्वीरुधः बीजानि चादाय विप्रेन्द्रैः सप्तर्षिभिः सह सत्यव्रतः तां सन्निहितां नावमारुरोह ॥ ४२ ॥

ततस्तं सत्यव्रतं मुनयः सप्तर्षय ऊचुः हे राजन् ! केशवं ध्यायस्व स केशवः नोऽस्मात्सङ्कटाद्रक्षिष्यति शं सुखं विधास्यति करिष्यतीति ॥ ४३ ॥

एवमुक्तेन राज्ञा सत्यव्रतेनानुध्यातो भगवान् प्रादुर्बभूव कथम्भूतः ? एकशृङ्गं धरतीति तथा हैमः स्वर्णाभः नियुतयोजनः लक्षयोजनपरिमितकायः ॥ ४४ ॥

ततो हरिणा पूर्वं यथोक्तः तथैव वरत्रेण दोरकरूपेण अहिना महासर्पेण वासुकिना नावं तस्य मत्स्यरूपिणो भगवतः शृङ्गे निबध्य शृङ्खलितां कृत्वेत्यर्थः । सन्तुष्टचित्तो मधुसूदनं हरिं तुष्टाव स्तुतिञ्चकारेत्यर्थः ॥ ४५ ॥

स्तोत्रमेवाह–अनाद्यविद्येत्यादिना, इत्युक्तवन्त इत्यतः प्राक्तनेन ग्रन्थेन । "वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि" इति श्रीभगवतैव तत्त्वप्रश्नाय सञ्चोदितः सत्यव्रतः तावत्तत्त्वजिज्ञासुरनादिदेहात्मभ्रान्तिस्वतन्त्रात्मभ्रान्तिरूपाज्ञानमूलकर्मवासनाभिः संसरतां जीवानाम् "ईश्वरस्य च सौहार्दं यदृच्छासुकृतं तथा विष्णोः कटाक्षः" इत्युक्तरीत्या केवलं प्रथमापेक्षतृश्रीभगवत्कृपयैव सदाचार्यसम्बन्धो नान्यथेत्यनबोधगितुं त्वत्कृपयैव परमगुरोस्तव प्राप्यस्य सान्निध्यं गत इत्यभिप्रयन् स्तौति—–अनादीति । अनाद्यविद्यया देहात्माभिमानादिरूपेणानाद्यज्ञानेन उपहता तिरोहिता आत्मसम्वित् स्वात्मपरमात्मयाथात्म्यज्ञानं येषां ते अतएव तन्मूलेनानाद्यविद्योपहतात्मज्ञाननिमित्तेन संसारपरिश्रमेण तापत्रयेणातुराः दुःखिताः जना इति शेषः । इह संसारे यदृच्छया यादृच्छिकसुकृतमूलया त्वत्कृपयेत्यर्थः । उपसृताः सदाचार्यद्वारा संश्रितास्सन्तो यं प्राप्नुयुः स भवानेव विमुक्तिदः मुक्त्युपायभूतः यं प्राप्नुयुरित्यनेन प्राप्यत्वमुक्तं विमुक्तिद इत्यनेन प्रापकत्वमुक्तम्. नोऽस्माकं परमो गुरुश्चाभूत् परमः नितरां प्राप्यः गुरुस्तत्त्वप्रश्नप्रेरणया हितोपदेष्टृत्वेनाज्ञाननिवर्तनेन चोपायभूतश्चासीदित्यर्थः ॥ ४६ ॥

जनस्य अनाद्यविद्ययोपहतात्मसंवित्त्वं तन्मूलकदेहसुखार्थप्रवृत्तिं पुनर्भगवत्सेवया अविद्यानिवृत्तिकथनेन तस्य गुरुशब्दप्रवृत्तिनिमित्ताश्रयत्वञ्च वदन् स्वाविद्यानिवृत्तये तं प्रार्थयते, जन इति । जनः जन्ममरणादिभाग्जीववर्गः अबुधः देहात्माद्यभिमानवान् निजकर्मबन्धनः पुण्यपापात्मकानादिकर्मवश्यः सुखेच्छया शब्दादिवैषयिकसुखसम्पादनेच्छया असुखं दुःखं यथा तथा कर्म समीहते चेष्टते करोतीति यावत् पुनर्यस्य तव सेवया तामसन्मतिं देहात्माभिमानस्वतन्त्रात्माभिमानादिरूपामसतीं मतिं विधुनोति निरस्यति स गुरुर्हितोपदेष्टा अज्ञाननिवर्तकश्च भवान्नोऽस्माकं ग्रन्थिमसन्मतिरूपां भिन्द्यादपनुद्यात् ॥ ४७ ॥

न केवलं भगवत्सेवा असन्मतिमेव निरस्यत्यपितु तन्मूलभूतं कर्म पुण्यपापात्मकमात्मस्वरूपतिरोधायकमपीति वदन् तं स्वहितोपदेशाज्ञाननिवर्त्तनार्थं प्रार्थयते—यदिति । पुमान् मुमुक्षुर्यस्य तव सेवया आत्मनस्तमः तमोवत्तिरोधायकं मलं पुण्यापुण्यकर्मात्मकं पापं जह्यात्त्यजेत् तत्र दृष्टान्तः रुद्ररोदनं रजतपिण्डः सुवर्णपिण्डो वा "यद्रोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रवसियततद्रजतं हिरण्यमभवत्"इति श्रौतप्रसिद्धेः स तु यथाग्नेः सेवया

श्रीमद्वीरराघवाचार्यकृतचन्द्रचन्द्रिका ।

ननु चालनादिना मलं जह्यान्निजवर्णं स्वासाधारणं वर्णं भजेत च तद्वदिति रुद्ररोदनमलस्याग्निसम्पर्कान्योपायानपनोद्यत्वदृष्टान्तकथनेनात्मनो मलस्यापि भगवत्सेवेतरानपनोद्यत्वमभिप्रेतं स ईश्वरो नोऽस्माकं गुरुर्भूयादतः स एव गुरोरपि परमो गुरुरर्वाचीनगुरूणामपि "आचार्यं मां विजानीयात्" इति तदात्मकत्वस्मरणात्तद्व्यतिरिक्तो न कश्चिद्गुरुरस्तीति भावः ॥ ४८ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अविनाशं विनाशविरोधिजीविनां ... सुखम् अविनाशं सुखयुक्तं पदं विधास्यतीति वा ॥ ४३-४४ ॥

वरत्रेण पाशेन मधुवन्मधु संसारं सूदितवानिति मधुसूदनः तम् ॥ ४५ ॥

अनाद्यविद्योपहतात्मसंवित्परमात्मज्ञानं येषां ते तथा सा विद्या मूलं कारणं यस्य स तन्मूलः स च संसारस्तन्मूलसंसारस्तस्मिन् परिश्रमस्ततो आतुराः क्लिष्टाः यदृच्छया पूर्वजन्मार्जितपुण्याभिमुखीभूतस्येच्छया इह लोके विशिष्टजन्मोपसृताः पुरुषाः यमाप्नुयुः स परमो गुरुर्भवान्नो विमुक्तिदोऽस्त्वित्यन्वयः ॥ ४६ ॥

कर्मनिर्मूलनं भगवत्सेवनमेवेत्याह—जन इति । आत्मीयकर्मणा बन्धनं यस्य स तथा अयमबुधो जनः सुखमाप्नुवानीतीच्छया कर्म समीहते ततो सुखं दुःखमाप्नोति इति यस्ततो बुधो जनो यस्येश्वरस्य सेवया कर्मविषयामसन्मतिं विधुनोति अतः कर्मनिर्मूलनं चाप्नोति गुरुर्ज्ञानोपदेष्टा स नो हृदये स्थितां ग्रन्थिं कर्मपाशकृतां भिन्द्यादित्यन्वयः ॥ ४७ ॥

एष पुमान्यत्सेवया आत्मनस्तमोलक्षणं मलं विजह्याज्जहाति निजं वर्णं परमात्मगतिम् आनन्दस्वरूपं च भजेत भजेत, कथमिव ? अग्निदाहलक्षणसेवया रुद्ररोदनं हिरण्यं स्वमलं दशविधं जहाति निजवर्णं शास्त्रसिद्धं स्वरूपं भजति यथा तथेत्यर्थः । किञ्च स जीवः पुनरव्ययोऽसम्भूतः आवरणरहितो भवति "ष्वेञ् संवरणे" इति धातोः गुरोर्गुरुः स परमो नो मुक्तिदो भूयादित्यन्वयः । ईशः मुक्तिदानसमर्थः ईर्लक्ष्मीः तस्याः शं यस्मात्स इति वा "जातरूपं श्रीमुक्टं हिरण्यं रुद्ररोदनम्" इत्यभिधानं स भवानव्यय इति वा ॥ ४८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

मदीयमिति महिमानमैश्वर्यं विभूतिनिर्विशेषमिति यावत् ममैव सम्यक् प्रकाशत्वात् अत एव मे मया अनुग्रहीतम् अनुग्रहेण प्रकाशितं यद्यपि मदनुभवान्तर्भूत एव ब्रह्मानुभव इत्यतो नास्ति मत्तः पृथगनुभवापेक्षा तथापि भक्तिप्रकाशितसाक्षान्मदनुभवे तन्मात्राऽनुभवो न स्फुटो भवति यदि तदीय स्फुटतायां तवेच्छा कथञ्चिद्वर्तते तदा साऽपि भवेदिति भावः । प्रसङ्गमिदमेकादशे विविच्यदर्शयिष्यति ॥ ३९ ॥

प्राक्कूलान् प्राचीनाग्रान् ॥ ४० ॥

ततः समुद्रेति, चाक्षुषमन्वन्तरान्तेच खल्वाकस्मिकप्रलयोऽयं यथोक्तं "रूपं स जगृहे मात्स्यं चाक्षुषान्तरसम्प्लवे" इति प्रतिमन्वन्तरान्तमपि तच्छ्रवणात् अत्र प्रमाणानि तत्रैव दर्शितानि किन्त्वस्य प्रलयस्य दैवेन षष्ठमन्वन्तरमध्य एव निर्भरजातत्वात् न तदन्ते पृथक् जातत्वमित्येव विशेषः स चाऽयं मन्वन्तरप्रलयो नैमित्तिकविशेष एवेति. नच प्रलयस्य चतुर्विधत्वहानिः तदेव मन्वन्तरप्रलये त्रैलोक्यमज्जनादैनन्दिनसाम्येन ब्रह्मापि किञ्चित् कालं सुष्वाप तदनुसारेण गौण्या वृत्त्या ब्राह्मी निशेत्युक्तामिति सति पुराणान्तरेणोपाचिते श्रीभागवतमते कल्पनान्तरं न कृतम् ॥ ४१-४५ ॥

अत्राविद्या तन्माया ॥ ४६—४७ ॥

गुरोरपि परमो गुरुरिति साक्षात्वत्प्राप्तौ नाऽन्योऽपेक्ष्य इति भावः ॥ ४८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

वरत्रेण दोरकरूपेण ॥ ४५ ॥

अनादिर्या अविद्या तया उपहता आवृता आत्मसंवित् येषां ते अत एवाऽविद्यामूलसंसारपरिश्रमैरातुराः इह संसारे भ्रमन्त एव यदृच्छया यादृच्छिक्या भक्तकृपयेत्यर्थः । उपसृता आश्रिताः यं प्राप्नुयुः स भवान् ग्रन्थिं भिन्द्यादित्युत्तरेणान्वयः । परमो गुरुरिति मद्विधयादृच्छिककृपावन्तो भक्त्युपदेशकाः सप्तर्षयो मे गुरवस्तेषामपि भक्त्युपदेशकस्त्वं मत्परमगुरुरित्यर्थः । यद्वा त्वमवतीर्य कदाचित्केषाञ्चिद्गुरुः केषाञ्चित्परमगुरुश्च भवसीति कश्चिदवतार एव सूचितः प्रतिश्लोकमेव गुरुपदप्रयोगादवसीयते ॥ ४६ ॥

न च त्वां विना प्रकारान्तरेण निस्तार इत्याह, जनो जीवः न विद्यते वस्तुतः सुखं यतस्तत् तां सुखेच्छां हृदयं हृदयस्थं ग्रन्थिमज्ञानं भिन्द्यात् ॥ ४७ ॥

नच ज्ञानेनैवाज्ञानं नश्येदिति वाच्यमित्याह—यस्य सेवयैव पुमान् जीवः आत्मनः स्वस्य तमोऽज्ञानरूपं मलं विजह्यात् यथा रुद्ररोदनं रजतं स्वर्णं च "यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रु प्रशीर्यत तद्रजतं हिरण्यमभवत्" इति श्रुतेः । तत् खल्वग्नेः सम्पर्कादेव मलं जहाति स्वस्वरूपञ्च भजेत् नतु चालनादिभिर्ज्ञानादिभिस्तथाज्ञानादिभिर्मलत्याग इत्यर्थः ॥ ४८ ॥

---

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

वरत्रेण दोरकरूपेण माहिना महाहिना नावं निबध्य मधुसूदनं तुष्टाव स्तोत्रं चकार ॥ ४५ ॥

स्तोत्रमेवाह—अनाद्यविद्येत्यष्टभिः । भगवता स्वानुग्रहेणैव प्रत्यक्षीभूय प्रलयाद्विमोचितोऽस्मीत्यवगम्य संसारादपि विमुक्तये तमेव प्रार्थयते अनादिर्या अविद्या अज्ञानं तया उपहता तिरोहिता आत्मसंवित् जीवात्मपरमात्मविषयकं ज्ञानं येषां ते अत एवाविद्यामूले संसारे यः परिश्रमस्तेनातुराः व्याकुलाः

न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम् ।
कर्तुं समेताः प्रभवन्ति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये ॥ ४९ ॥
अचक्षुरन्धस्य यथाऽग्रणीः कृतस्तथा जनस्याऽविदुषो बुधो गुरुः ।
त्वमर्कदृक्सर्वदृशां समीक्षणो वृतो गुरुर्नः स्वगतिं बुभुत्सताम् ॥ ५० ॥
जनो जनस्यादिशतेऽसतीं मतिं यया प्रपद्येत दुरत्ययं तमः ।
त्वं त्वव्ययं ज्ञानममोघमञ्जसा प्रपद्यते येन जनो निजं पदम् ॥ ५१ ॥
त्वं सर्वलोकस्य सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः ।
तथाऽपि लोको न भवन्तमन्धधीर्जानाति सन्तं हृदि बद्धकामः ॥ ५२ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

इह संसारे यदृच्छया यदनुग्रहादेवोपसृताः शरणं गताः सन्तः यं प्राप्नुयुः स विमुक्तिदो भवानेव साक्षान्नो गुरुः सन् ग्रन्थिं भिन्द्यादित्युत्तरेणाऽन्वयः ॥ ४६ ॥

ननु, वैराग्याभावे कुतो विमुक्तिरित्यत्र तदपि त्वदनुग्रहेणैव भवतीत्याह—जन इति । अबुधो जनो निजकर्मबन्धनः अत एव सुखेच्छया नास्ति सुखं यतस्तदसुखं दुःखोदर्कं कर्म समीहते करोतीत्यर्थः । पुनर्यस्य तव सेवया तामसतीं मतिं सुखेच्छां हृदयं हृदयगतवासनारूपां ग्रन्थिम् अयं जनस्तदा विधुनोति यत् यदा स भवानेव भिन्द्यात् अपनुद्यात् यतः नोऽबुधानां स एव परो गुरुः इत्यन्वयः ॥ ४७ ॥

ननु, यज्ञदानादिभिरन्तःकरणशुद्धिं विना कुतो ग्रन्थिभेदो मुक्तिश्च स्यादित्यत्र यज्ञदानादिकिञ्चित् कस्यदेव अन्तःकरणशोधकं सर्वाशुद्धिमूलभूतकर्मनिर्नाशिन्या भवत्सेवया निःशेषेणान्तःकरणं शुद्धं स्यादित्याह—यदिति । यस्य तव सेवया आराधनेन पुमान् आत्मनस्तमः "अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते । यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्वगा" इति स्मृतिप्रसिद्धम् अविद्यानामकं कर्म तदेव मलं विजह्यात् त्यजेत् एष एव कर्मबन्धरहितो निजं वर्णं स्वरूपं भजेत "निरञ्जनः परमं साम्यमुपैति" इति श्रुतेः । स ईशः गुरोर्गुरुः नः परमः सेव्यो भूयात् तत्र दृष्टान्तः रुद्ररोदनं रजतं यथाग्नेः सम्पर्कात् मलं जहाति स्ववर्णं भजते च रजतस्य रुद्ररोदनत्वं तु "यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्रवत्तद्रजतं हिरण्यं चाभवत्" इति श्रुत्योक्तम् ॥ ४८ ॥

---

भाषा टीका ।

श्रीहरि राजा को ऐसी आज्ञा देकर अंतरध्यान होगये राजा भी समय की प्रतीक्षा करते रहे जो भगवान् बतलाय गये रहे ॥ ३९ ॥

राजर्षि पूर्व मुखदर्भों को पृथिवी पर बिछाकर, मत्स्यरूप धारण करने वाले श्रीहरि के चरणों का ध्यान करते हुए ईशान दिशा को मुखकर बैठते हुए ॥ ४० ॥

तब तौ सप्तम दिवस में अपनी मर्यादा को छोडकर सर्व पृथिवी को डुबावता हुआ बडे भारी मेघों की वर्षा से वृद्धि को प्राप्त होने वाला ऐसा समुद्र देख कर पडा ॥ ४१ ॥

और राजा भगवान् की आज्ञा का ध्यान करते रहे इतनेमें आई हुई नौका देख पडी । वस औषधी बीज कुर्त्त सर्व उसमें धरकर ऋषियों सहित उस नौका में बैठ गये ॥ ४२ ॥

बडे प्रसन्न होकर मुनि लोग राजा से बोले, कि—हे राजन् ! अब केशव का ध्यान करो वही इस संकट से हम लोगों की रक्षा कर मंगल का विधान करेंगे ॥ ४३ ॥

वस ऋषियों के आज्ञा के अनुगुण ध्यान करने पर उस महार्णव में एक शृंग वाला नियुत (लक्ष) योजन के मत्स्य का रूप धारण कर आप प्रकट हुए ॥ ४४ ॥

तब जैसे पहिले हरि की आज्ञा रही उसी प्रकार उनके शृंग में वासुकी सर्प से नौका को बांधकर प्रसन्न होकर श्रीमधुसूदन की स्तुति करने लगे ॥ ४५ ॥

राजा बोले, कि—अनादि कर्म प्रवाह रूप अविद्या से नष्ट आत्मस्वरूप ज्ञान वाले, और अविद्या मूलक संसार के परिश्रम से आतुर, इस संसार में जिन आप के अनुग्रह से आपके शरण प्राप्त होकर जिन आपको प्राप्त होते हैं सो आप हमारे मुक्ति देने वाले परम गुरु हैं ॥ ४६ ॥

अपने कर्मों से बँधा हुआ यह अबुधजन सुखकी इच्छा से असुख कर्मों मे प्रवृत्त होरहा है, वह जन जिसकी सेवा से खोटी मति को नष्ट करता है अपनी हमारा परम गुरु हमारे हृदय की ग्रन्थि का भेदन करो ॥ ४७ ॥

अग्नि के संयोग से जैसे सुवर्ण मलको त्याग देता है और स्वर्ण के तुल्य निजवर्ण को प्राप्त होजाते हैं वह अव्यय ईश्वर परम गुरुके गुरु होवें ॥ ४८ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

परमेश्वरत्वं परमगुरुत्वं च प्रपञ्चयन्नाह—नेति । यत्प्रसा-

तं त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रतिबोधनाय ।
छिन्ध्यर्थदीपैर्भगवन्वचोभिर्ग्रन्थीन् हृदय्यान्विवृणु स्वमोकः ॥ ५३ ॥

श्रीशुक उवाच ।

इत्युक्तवन्तं नृपतिं भगवानादिपूरुषः ।
मत्स्यरूपी महाम्भोधौ विहरंस्तत्त्वमब्रवीत् ॥ ५४ ॥
पुराणसंहितां दिव्यां सांख्ययोगक्रियावतीम् ।
सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः ॥ ५५ ॥
अश्रौषीदृषिभिः साकमात्मतत्त्वमसंशयम् ।
नाव्यासीनो भगवता प्रोक्तं ब्रह्मसनातनम् ॥ ५६ ॥

श्रीधरस्वामिकृतभावार्थदीपिका ।

दस्यायुतभागस्तस्य लेशमात्रमप्यन्ये देवादयः सर्वे समेता अपि स्वयं तन्निरपेक्षाः सन्तः कर्तुं न प्रभवन्ति ॥ ४९ ॥

तदेव दृष्टान्तेन स्पष्टयन्नाह—अचक्षुरिति। अविदुषो जनस्याबुधोऽविद्वान् गुरुस्तथैव अर्कप्रकाशवत्स्वत एव दृक् ज्ञानं यस्य सोऽर्कदृक् अतः सर्वदृशां सर्वेन्द्रियाणां समीक्षणः प्रकाशकः अत एव सुगतिं बोद्धुमिच्छद्भिर्नोऽस्माभिर्गुरुर्वृतोऽसि ॥ ५० ॥

किञ्च प्राकृतो गुरुरनर्थहेतुरित्याह—जन इति । आदिशते उपदिशति असतीं मतिमर्थकामादिमतिम् तमः संसारम् ॥ ५१ ॥

ननु, तर्हि सर्वोपि लोको मामेव किं नोपसरति ? अज्ञानादित्याह—त्वमिति । प्रियश्चासावीश्वरश्च ॥ ५२ ॥

अहं तु त्वामेव शरणं यामीत्याह—तं त्वामिति । प्रतिबोधनायोपदेशाय अर्थदीपैः परमार्थप्रकाशकैः हृदये भवान् ग्रन्थीनहङ्कारादीन् स्वमोकः स्वं रूपं विवृणु प्रकाशय ॥ ५३ ॥

नृपतिंप्रति ॥ ५४ ॥

पुराणसंहिता मत्स्यपुराणमशेषतोऽब्रवीदित्यनुषङ्गः ॥ ५५ ॥ ॥५६॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

यत्सेवया आत्मनो मलं विजह्यादित्यनेन मुक्तिविरोधिपापकर्मनिवर्तकत्वकथनेन तस्यैव मोक्षप्रदत्वमुक्तं, तदेव व्यतिरेकमुखेनापि वदन् देवतान्तराणाममुक्तिदत्वं च वदंस्तमेव शरणं व्रजति—नेति । पुंसः भगवत्सेवाविधुरस्य पुंसः अन्ये देवाः सर्वे समेता अपि स्वयं निरपेक्षास्सन्तो गुरवोऽपि सन्तः यत्प्रसादायुतभागलेशं यस्य भगवतः तव प्रसादस्यायुतभागः अयुतसङ्ख्याकानां भागानां मध्ये य एको भागस्तस्य लेशं कर्तुं न प्रभवन्ति मोक्षप्रदानासमर्था इत्यर्थः । तं मुक्तिदम् ईश्वरं सर्वान्तरात्मानं त्वां शरणं प्रपद्ये मुक्त्युपायत्वेनाध्यवस्यामि ॥ ४९ ॥

देवतान्तराणां तत्प्रसादायुतभागलेशकरणासमर्थत्वे कर्मवश्यत्वतन्मूलकासर्वज्ञत्वादिकमेव हेतुरित्यभिप्रयन्नज्ञलोकस्य ब्रह्मादिस्तम्बपर्यन्तस्याज्ञाननिवर्तनोपयुक्तसार्वज्ञ्यादिगुणयुक्तं त्वामेव गुरुं वृणोमीत्याह——सचक्षुरिति । अन्धस्य चक्षुरिन्द्रियरहितस्य पुंसो यथा सचक्षुः पुमानग्रणीः पुरतो नेता कृतः वृतः तथा विदुषः स्वात्मरक्षणोपयुक्तज्ञानेनापि विरहितस्य जनस्य जन्ममरणादिभाजो ब्रह्मप्रभृतिजीववर्गस्य त्वमर्कदृक् अर्कप्रकाशवत् स्वत एव दृग्ज्ञानं यस्य सः अर्क एव दृग्यस्येति वा "चक्षुषोस्सूर्योऽजायत" "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ" इत्यादि श्रुतेः" अनेन सर्वज्ञत्वमुक्तं सर्वदृशां समीक्षणः प्रकाशकस्यापि प्रकाशकत्वशक्तिप्रदः "तमेव भान्तमनुभाति सर्वं तस्यभासा सर्वमिदं विभाति" इति श्रुतेः । अनेन ज्ञानप्रदत्वमुक्तम्. एवम्भूतस्त्वं सुगतिं समीचीनतत्प्राप्त्युपायं बुभुत्सतां बोद्धुमिच्छतामस्माकं गुरुर्वृतः कर्तरि षष्ठी बोद्धुमिच्छद्भिः गुरुत्वेन वृत इत्यर्थः ॥ ५० ॥

युक्तं चैतदितरेषां गुरुमन्यानामनर्थहेतुत्वाद्भवतस्तु निरतिशयपुरुषार्थहेतुत्वादित्याह—जनइति । जनः जन्ममरणादिभाक् संसारी जीवः गुरुत्वाभिमानवान् जनस्य संसारिणो जीवस्यासतीं गतिमर्थकामाद्युपायमादिशते आज्ञापयति बोधयतीत्यर्थः । तदादिष्टगतेरसत्त्वन्दर्शयन्विशिनष्टि—ययेति । यया संसारिणोपदिष्टया गत्या अन्ततो दुरत्ययमनतिक्रमणीयं तमः स्वपरस्वरूपतिरोधायकं संसृतिरूपं प्रपद्यते प्राप्नोति त्वन्तु अव्ययमक्षय्यफलप्रदं केवलानन्दैकहेतुममोघं फलाविनाभाविज्ञानं स्वपरयाथात्म्यगोचरज्ञानमादिशत इत्यनुषङ्गः तुशब्देन निरस्तनिखिलदोषत्वसमस्तकल्याणगुणत्वादिना जगद्वैलक्षण्यमभिप्रेतम् तदादिष्टज्ञानस्य निरातिशयपुरुषार्थहेतुं वदन्विशिनष्टि—अञ्जसेत्यादिना । येन त्वदादिष्टेन ज्ञानेन जनोऽञ्जसा सुखेनैव निजं वैष्णवं पदं स्थानं प्रपद्यते निजमित्यनेन यथा तुशब्देन भगवतो निरस्तनिखिलदोषत्वेन समस्तकल्याणगुणात्मकत्वेन च जनाद्वैलक्षण्यमभिप्रेतं तथा तत्पदस्य निरस्तनिखिलदुःखमिश्रत्वातिक्षुद्रत्वादिदोषत्वेन निरतिशयकेवलानन्दादिमत्वेन च

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

वैलक्षण्यममभिप्रेतम्. अञ्जसेत्यनेन जनोपदिष्टयाऽसत्यापि गत्या तत्फलभूतार्थकामादेरपि दुःखप्राप्यत्वमभिप्रेतम् ॥ ५१ ॥

ननु, जनविलक्षणो निरतिशयपुरुषार्थप्रदश्चेदहमेव सर्वैरपि किं न समाश्रयते ? इत्यत्राह–त्वमिति । सर्वलोकस्यानालोचित-विशेषाशेषलोकस्य त्वं सुहृद्धितैषी प्रियः प्रीतिविषयश्चासावीश्वरो ऽन्तःप्रविश्य नियन्ता आत्मा धारकः गुरुर्हितोपदेष्टा ज्ञानसंज्ञान-प्रवर्तको ऽभीष्टसिद्धिकरश्च अथापि यद्यप्युक्तविधस्त्वं तथापि हृदयकमल एवं वसन्तं भवन्तम् उक्तविधं न सर्वो लोको जानाति, अज्ञाने हेतुं वदन् लोकं विशिनष्टि–अन्धधीर्हृदि बद्धकाम इति । अन्धधीः देहतदनुबन्धितद्भोग्यार्थकामादिषु पुरुषार्थदृष्टिः न तु देहविलक्षणात्मपरमात्मयाथात्म्यधीः अतएव बद्धकामः शब्दादिविषयलिप्सुः ॥ ५२ ॥

अथोक्तविधं भगवन्तं प्रपद्य ज्ञानोपदेशार्थं प्रार्थयते तंत्वा-मिति । तमुक्तविधं देववरं "तं देवतानां परमं च दैवतम्" इति श्रुत्युक्तरीत्या निस्समाभ्यधिकदैवतम् अत एव वरेण्यं वर-णीयम् ईशञ्च त्वामहं प्रतिबोधनाय स्वात्मपरमात्मयाथात्म्यज्ञानाय तदुपदेशार्थमिति भावः । प्रपद्ये शरणं व्रजामि अतो हे भगवन् ! अर्थदीपैः परमपुरुषार्थभूतपरमात्मस्वरूपप्रकाशकैर्वचोभिः हृदय्यान् मद्धृदयगतान् ग्रन्थीन् ग्रन्थिवद्दुर्निर्मोचयान् देहात्माभिमानादीन् छिन्धि अपाकुरु स्वं स्वकीयम् ओकः स्वरूपं स्थानं वा विवृणु प्रका-शय ॥ ५३ ॥

इतीत्थं प्रार्थयमानं नृपतिमुद्दिश्य भगवानादिपुरुषो मत्स्य-रूपी महाम्भोधौ प्रलयार्णवे विहरंस्तत्त्वं तत्त्वप्रतिपादकं पुराणम् अब्रवीत् तत्त्वप्रतिपादकं पुराणमुपदिदेशेत्यर्थः ॥ ५४ ॥

तदेवाह–पुराणेति । दिव्यां देवस्य स्वस्य सम्बन्धिनीं प्रतिपादिकां देवेन स्वेनैव प्रणीतां वा साङ्ख्यं प्रकृतिविलक्षणात्मकस्वरूपयाथा-त्म्यज्ञानं योगो भगवद्भक्तियोगः क्रिया नित्यनैमित्तिकादिक्रिया-योगः त एते प्रतिपाद्यत्वेनास्यां सन्तीति तथा तां पुराणसंहितां मात्स्यपुराणरूपां संहितां तथात्मनो गुह्यं रहस्यं चा-शेषतः कार्त्स्न्येन सत्यव्रतस्याब्रवीदित्यनुषङ्गः ॥ ५५ ॥

सर्वं तद्भगवता उपदिष्टमात्मनः प्रत्यगात्मनः तत्त्वं याथात्म्यं सनातनं ब्रह्म तद्याथात्म्यञ्च ऋषिभिस्सह नाव्युपविष्टसत्यव्रतो निस्संशयं यथा भवति तथा शुश्राव ॥ ५६ ॥

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

अन्ये देवाः अन्ये गुरवो जनाश्च स्वयं समेता मिलिताः पुंसः यस्य हरेः प्रसादायुतभागलेशं कर्तुं न प्रभवन्ति तद-नुग्रहमन्तरेणेतिशेषः । अहं तं त्वामीश्वरं शरणं यामीत्य-न्वयः ॥ ४९ ॥

यथाऽन्धकस्य पुंसः स चक्षुर्दृष्टिमानग्रणीः अग्रतो गन्ता कृतः यथा चाऽविदुषो जनस्य बुधो जनो गुरुः कृतः शास्त्र-विशारदैरिति शेषः । तथा सुगतिं बुभुत्सतां बोद्धुमिच्छतां नोऽर्थ-दृक् पुरुषार्थद्रष्टा सर्वदृशां सर्वेन्द्रियाणां समीक्षणः साक्षी त्वं गुरुर्वृतः ज्ञानोपदेशकत्वेनेतिशेषः । अचक्षुरितिपाठे अयमर्थः त्वामन्तरेणेतरेषां गुरुत्वं पुरुषार्थानुपयोगिसम्यग्ज्ञानहीनत्वा-दित्याह–अचक्षुरिति । यथाऽन्धस्याऽचक्षुषोऽन्धोऽग्रणीः कृतो भवति तथा ऽविदुषां जनस्याबुध एव गुरुर्भवति अन्धेनैव नीयमाना यथान्धाः "उभावप्यश्रुतग्रन्थौ उभावपि जडात्मकौ" इत्यादि-श्रुतिस्मृतिभ्यः त्वञ्चार्थदृक् शिष्यस्यापेक्षितपुरुषार्थदर्शी, कुतः ? दर्शनसाधनत्वेन दृशोपीन्द्रियाणि तेषां साक्षित्वादस्माकं गुरु-त्वेन वृत इति ॥ ५० ॥

एतदेव विवृणोति–जनइति । जनो जननाद्यभिमानी तादृशस्य जनस्या सतीं गतिम् इहामुत्र चोरुफलदं ज्ञानमादिशति । यथा येन ज्ञानेन दुरत्ययं तमः नित्यदुःखात्मकमन्धं तमः प्राप्नोति तादृशमिति शेषः । यथेति पाठे यथोपदिष्टेन दुरत्ययं तमः प्राप्येत तथो-पादिशति, तमन्नासन्नसदसविद्याद्याकारेणेत्यर्थः । "अन्धतमः प्रवि-शन्ति" इतिश्रुतेः ज्ञानस्य सत्वे द्वैतभङ्ग इति तत्राह–त्वमिति । जनो येन ज्ञानेन निजं पदं निर्दोषत्वेन त्वद्रूपसदृशं सच्चिदा-नन्दलक्षणमञ्जसा अव्यवधानेन प्रपद्यते यच्चाव्ययमक्षयं यच्चामो-घमव्यभिचारितया फलसमर्पकं त्वं तदेव ज्ञानमादिशसीत्य-न्वयः ॥ ५१ ॥

इतोपि त्वदुपदिष्टज्ञानमेवापेक्षितपुरुषार्थसाधनं नान्यत्, अनि-मित्तबन्धुत्वादिगुणपूर्णत्वेन सिद्धत्वेन वञ्चनाशङ्कानास्पदत्वा-दित्याशयेनाह–त्वमिति । सुहृत्प्रत्युपकारशून्यः प्रियश्चेश्वरश्च विषय-सुखस्यापीश्वर इति वा आत्मा पूर्णानन्दः गुरुर्ज्ञानोपदेष्टा जाना-तीति ज्ञानम् अभीष्टसिद्धिरपेक्षितपुरुषार्थसाधकः लोकः सुहृत्त्वादि गुणवन्तं कुतो न जानातीति तत्राह—तथापीति । यद्यप्यनिमित्त-बन्धुस्तथाऽपि लोको भवन्तं न जानाति, कुतः ? अन्धधीः नष्टज्ञान-त्वात् ज्ञाननाशः कस्मादित्यत उक्तं हृदीति दुरवस्थत्वाच्च तज्ज्ञान-मित्यत उक्तं सन्तमिति हृदिस्थितमुभयत्र योज्यम् ॥ ५२ ॥

इदानीं स्वार्थं प्रकाशयति–तं त्वामिति । प्रतिबोधनायत्वत्स्व-रूपविषयज्ञानायाहं यो ज्ञानोपदेष्टृत्वादिगुणोपेतस्तं त्वां शरणं प्रपद्य इत्यन्वयः—देवोत्तमत्वात्त्वमेव शरण्य इति भावेनोक्तं देववरमिति. सौन्दर्यादिगुणाभावेन त्वद्भक्तिरुदेतीति भावेनोक्तं वरेण्यमिति उक्तगुणा अन्यत्र व्यभिचारिणो नेत्याह, ईशमिति अन्यस्येश्वरत्वाऽनुपपत्तिः हृदय्याम् अहङ्कारसम्भूतां ग्रन्थिमर्थस्य दीपकैः प्रकाशकैः "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" इत्यादिलक्षणवचोभिः किञ्च स्वमोकः स्वस्वरूपं स्वाश्रमं वैकुण्ठं वा विवृणु प्रकाशयेत्यन्वयः "ओकसी मन्दिराश्रयौ" इति च ॥ ५३—५४ ॥

सांख्ययोगक्रियावर्तीं ज्ञानभक्तिकर्मयोगवर्तीं पुराणसंहिता-मब्रवीत् इदं अज्ञेयमिति भावेनोक्तमात्मगुह्यमिति आचार्यस्तु ते गति वक्तेनिवदुपरिष्टेव शिष्टं नास्तीत्यत उक्तमशेषत इति ॥५५॥

नावि जलयाने ॥ ५६ ॥

---

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

अन्येतु स्वतन्त्रमन्यास्त्वत्तीवाकिञ्चित्करा इत्याह—न यदिति ॥ ४९ ॥

प्राग्जन्मनि गुरुप्राप्तभक्तस्तस्य क्षितीशितुः संस्काराद्भजतः श्रीशस्तुवतः सोऽयमाशयः स्वयंचाविश्य कश्चिद्वा भवानेव गुरुर्भवेत् अतो भगवन्तमासाद्य भवन्तं गुरुमर्थये तत्र त्वमर्कदृक् त्वदभिज्ञानां सर्वेषामपि श्रेष्ठ इत्यर्थः ॥ ५०—५६ ॥

---

### श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

अतस्त्वां विहाय झटिति प्रसादा अपि देवादयो नैव सेव्या इत्याह—नेति । यत्प्रसादस्यायुतभागस्तस्य लेशमात्रमप्यन्ये देवाः गुरवः पित्रादयः जनाः सुखदित्सवो नृपादयश्च सर्वे समेता अपि स्वयं तन्निरपेक्षाः सन्तः कर्तुं न प्रभवन्ति ॥ ४९ ॥

यतस्त्वत्सेवया विना पुमान् न मलं विजह्यादित्युक्तमतस्त्वत्सेवानुपदेष्टा गुरुरपि न सेव्य इत्याह—अचक्षुरिति । अविदुषो जनस्याबुधोऽपण्डितः पण्डितो बन्धमोक्षविदिति "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति त्वदुक्तभक्त्युपदेष्टैव बुधः स एवगुरुरन्यस्त्वनर्थहेतुरित्यर्थः । अत एव नाऽस्माकं सुगतिं भक्तिं बुभुत्सतां गुरुर्वृतो यः स तु त्वमेव साक्षादित्यर्थः । अर्कदृक् अर्कइव दृश्य इत्यर्थः । सर्वदृशां सर्वनेत्राणां सर्वेन्द्रियाणां सर्वज्ञानां च समीक्षणः प्रकाशक इति पक्षत्रये द्रष्टव्यम् ॥ ५० ॥

दृष्टान्तव्यञ्जितमर्थं स्पष्टमाह—जन इति । आदिशते उपदिशति अतः प्राकृतगुरुरनर्थहेतुर्दूरे परिहरणीय इत्यर्थः । त्वन्तु गुरुरूप एवावतीर्णः अव्ययं ज्ञानं भक्त्युत्थं ज्ञानमेव उपादिशसि नतु केवलं विद्यामयं यत् फलमुत्पाद्य येतीत्यर्थः । निजं पदं त्वच्चरणारविन्दं वैकुण्ठं वा ॥ ५१ ॥

नन्वेवं गुरुभूतं मां किमिति सर्वे न प्रपद्यन्ते दुर्बुद्धित्वादित्याह त्वामिति । सुहृदादिरूप इत्यन्ये सुहृदादयो वस्तुतः सुहृदादयो नैव भवन्तीत्यर्थः । यद्वा सुहृत् स प्रियः कान्तभावविषयः ईश्वरः दास्यभाव विषयः आत्मा शान्तभावविषयः गुरुर्दास्यविशेषविषयः यद्वा अगुरुः सुतादिरिति वात्सल्यभावविषयः ज्ञानं भावशून्यानां केवलमोक्षप्रदः अभीष्टसिद्धिः सकामानां सर्वकामप्रद इति सन्तं साधुरूपं त्वाम् अन्धधीरसाधुर्यतो हृदि निबद्धदुर्वासनः ॥ ५२ ॥

अहं तु त्वद्भक्तकृपासिद्धाञ्जनविगतान्ध्यस्त्वामेव गतिं पश्यामीत्याह—तमिति । प्रतिबोधनाय संसारशय्यायां निद्राणं मां कृपया प्रतिबोधयेत्यर्थः । अर्थदीपैः परमार्थप्रकाशकैः हृदयभवान् ग्रन्थीन् स्वमोको वैकुण्ठं विवृणु तत्प्रापकवर्त्म ब्रूहि ॥ ५३ ॥ ५४ ॥

पुराणसंहितां मत्स्यपुराणम् ॥ ५५ ॥ ५६ ॥

---

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

स एव भगवान् सेव्यो नान्ये इत्याह—न यदिति । यत्प्रसादस्य अयुतभागस्तस्य लेशमात्रमपि अन्ये देवादयः सर्वे समेताः सङ्घीभूता अपि स्वयं तन्निरपेक्षाः सन्तः कर्तुं न प्रभवन्ति दातुं न शक्नुवन्ति तं त्वां शरणं प्रपद्ये ॥ ४९ ॥

गुरोर्गुरुरित्यनेन त्वदनुवर्तिस्तत्त्वज्ञो मुक्तिदाता गुरुरादरणीय एव तत्त्वानभिज्ञस्त्वत्तो बहिर्मुखो गुरुस्तु अन्धमन्धो यथा गर्ते पातयति तथा संसारे पातयत्यतस्तमनादृत्यास्माभिस्त्वं गुरुर्वृतः इत्याह—अचक्षुरिति । अर्कदृक् अर्कवत् अन्यप्रकाशानिरपेक्षा दृक् दृष्टिर्यस्य सः सर्वदृशां सर्वदृष्टीनां समीक्षणः प्रकाशकः ततः स्वगतिं बोद्धुमिच्छद्भिर्नोऽस्माभिस्त्वं गुरुर्वृतोसि ॥ ५० ॥

एवमतत्त्वज्ञो हरिविमुखो गुरुः संसार साधकः एतत्तीत्यं दृष्टान्तेनोक्तमथ सर्वेणापि, त्वद्ज्ञानभक्तिबहिष्कृतेन प्राकृतजनेनोपदिष्टा मतिः सुतरां संसारे पातयति अतस्त्वदुपदिष्टेन ज्ञानेन त्वत्पदलाभो भवेदित्याह—जन इति । असतीं अर्थकामादिविषयाम् तमः संसारं त्वंतु अमोघज्ञानमादिशसे ॥ ५१ ॥

अथ भगवतः सर्वसुहृत्त्वादिगुणान् नित्यबद्धस्य जीवस्य स्वभावं च वर्णयन् स्वयं मुमुक्षुर्भगवन्तं शरणं व्रजति त्वमिति द्वाभ्याम् । प्रियश्चासावीश्वरश्च ॥ ५२ ॥

प्रपद्ये शरणं व्रजामि. प्रतिबोधनाय त्वदुपदिष्टतत्त्वबोधाय अर्थदीपैः आत्मानात्मपरमात्मपदार्थप्रकाशकैः हृदय्यान् हृदये भवान् अहङ्कारादीन् स्वं स्वकीयमोकः वासस्थानं विवृणु प्रकाशय ॥ ५३ ॥

नृपतिं प्रति तत्त्वं तत्त्वप्रकाशकं पुराणम् अब्रवीत् ॥ ५४ ॥

एतदेवाह—दिव्यां देवस्य भगवतः सम्बन्धिनीं तत्प्रोक्तां तद्विषयां साङ्ख्यम् आत्मानात्मपरमात्मज्ञानं योगः परमात्मभक्तिः क्रियाज्ञानभक्तिसाधनं कर्म साङ्ख्ययोग क्रियाः सन्त्यस्यां सा तथा ताम् पुराणसंहितां मत्स्यपुराणरूपं संहिताम् आत्मगुह्यं स्वरहस्यं च सत्यव्रतस्य सत्यव्रतंप्रति अब्रवीदित्यनुषङ्गः ॥ ५५ ॥ ॥ ५६ ॥

---

### भाषा टीका ।

अन्य सम्पूर्ण देव लोग गुरु लोग तथा पुरुष आप भी वे सब मिलकर भी जिन आपके प्रसाद का अयुत भाग [ दश हजार में हिस्से ] का लेश मात्र भी पुरुष के ऊपर नहीं करसक्ते हैं तिन आप ईश्वर के मैं शरण को प्राप्त हूं ४९

जैसे अंधे का अग्रगण्य अन्धा होवे, और अज्ञ का गुरु भी अज्ञ होवे, इसी प्रकार आपसे व्यतिरिक्त अन्य देवादिक स्वयं अपूर्ण हैं फिर और के ऊपर प्रसन्न होकर भी क्या आप सदृश उपकार करसके हैं ? कभ नहीं ॥ और आप सूर्य के तुल्य सर्व इन्द्रियों के प्रकाश ही अत एव अपनी उत्तम गति जानने की इच्छा वाले ऐसे हम लोगों ने आप ही को गुरु स्वीकार किये हैं ॥ ५० ॥

प्राकृत गुरु, शिष्य को ऐसी खोटी बुद्धि अर्थात् अर्थ कामादि विषयक मति का उपदेश करते हैं, कि—जिससे फिर

अतीतप्रलयापाय उत्थिताय स वेधसे ।
हत्वाऽसुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः ॥ ५७ ॥
स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः ।
विष्णोः प्रसादात्कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः ॥ ५८ ॥
सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः ।
सम्वादं महदाख्यानं श्रुत्वा मुच्यत किल्बिषात् ॥ ५९ ॥
अवतारो हरेर्योऽयं कीर्तयेदन्वहं नरः ।
सङ्कल्पास्तस्य सिद्ध्यन्ति स याति परमां गतिम् ॥ ६० ॥
प्रलयपयसि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा ।
दितिजमकथयद्यो ब्रह्मसत्यव्रतानां तमहमखिलहेतुं जिह्ममीनं नतोऽस्मि ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्त्र्यां संहितायां वैयासिक्याम्
अष्टमस्कन्धे मत्स्यावतारचरितानुवर्णनं नाम
चतुर्विंशोऽध्यायः ॥ २४ ॥

समाप्तोऽयमष्टमस्कन्धः ॥ ८ ॥

॥ श्रीकृष्णार्पणमस्तु ॥

भाषा टीका ।

भी दुस्तरतम को प्राप्त होवे, और आप तो अमोघ और अव्यय ज्ञान को देते हो कि जिससे पुरुष निजपद को प्राप्त होजाता है ॥ ५१ ॥

हे भगवान् ! आप संपूर्ण लोक के सुहृत हो, और प्रिय ईश्वर हो, आत्मा हो, गुरु हो, ज्ञान हो, और अभीष्ट सिद्धि भी आपही हो अर्थात् पुरुष को परम प्राप्य आपही हो । तथापि कामों से बंधा हुआ अंध बुद्धि यह लोक हृदय में रहने वाले भी आपको नहीं जानता है ॥ ५२ ॥

देवों में श्रेष्ठ प्रिय तम होने से भी वरणीय ऐसे आप ईश का अपने ज्ञान के लिये मैं आश्रय लेता हूं, हे भगवान् अर्थ के प्रकाशक ऐसे अपने वचनों से हृदय की ग्रंथियों का अर्थात् अहंकारादिकों का छेदन करो ॥ ५३ ॥

श्रीशुक उवाच ॥

श्रीशुकदेवजी बोले, कि—इस प्रकार राजा सत्य व्रत जब स्तुति करचुके तब भगवान् आदि पुरुष मत्स्य रूपधारी प्रलय समुद्र में विहरते हुए राजा को तत्त्व आपने क्या कहा ? सो कहते हैं, कि—सांख्य योग, और क्रिया ( कर्म ) का प्रतिपादन जिसमें ऐसी दिव्य पुराण संहिता अर्थात् मत्स्य पुराण, और जो आपको गुप्त ज्ञान रहो सो भी सत्य व्रत राजर्षि को कहते भये ॥ ५५ ॥

ऋषियों के सहित निःसंदेह होकर नौका में बैठा हुआ आत्म तत्त्व ज्ञान और जो भगवान ने सनातन ब्रह्म को उपदेश किया सो राजा ने सब श्रवण किया ॥ ५६ ॥

---

श्रीधरस्वामिकृतभावार्थदीपिका ।

अतीतः पूर्वो यः प्रलयस्तस्यापायेऽवसाने ॥ ५७—५९ ॥
योऽयं हरेरवतारस्तं यः प्रकीर्तयेत् ॥ ६० ॥
सत्यव्रतानां सत्यव्रतस्य ऋषीणां च छत्रिणो गच्छन्तीतिवल्लिङ्गसमवायाद्बहुवचनम् जिह्ममीनं मायामत्स्यम् ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीधरस्वामिकृतभावार्थदीपिकायां
चतुर्विंशोऽध्यायः ॥ २४ ।

समाप्तोऽयमष्टमस्कन्धः ॥ ८ ॥

श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका ।

ततो हरिरतीतः पूर्वो यः प्रलयः तस्यापाये अवसाने उत्थिताय शयनादिति शेषः । वेधसे चतुर्मुखाय वेदान् हयग्रीवेणापहृतान् तमसुरं हत्वा प्रत्याहृत्य आदिशद्ददौ ॥ ५७ ॥

ततः स तु स एव सत्यव्रतो राजा ज्ञानविज्ञानाभ्यां संयुतः आगमोत्थविवेकोत्थज्ञानाभ्यां संयुतः विष्णोः प्रसादाननुग्रहादेव अस्मिन्कल्पे वैवस्वतो मनुरभूत् ॥ ५८ ॥

एवमुपवर्णितमत्स्यावतारचरित्रो मुनिस्तदाख्यानश्रवणफलमाह—सत्यव्रतस्येति । मायामत्स्यस्याद्भुतमत्स्यरूपिणः स्वसङ्कल्पोपात्तमत्स्यरूपिणो वा शार्ङ्गिणः हरेः सत्यव्रतस्य राजर्षेः मनोश्च सम्वादरूपमिदमाख्यानं श्रुत्वा पुमान् किल्बिषात् स्वर्गापवर्गश्रेयोविरोधिनः पापात् मुक्तो भवेत् ॥ ५९ ॥

यो नरो हरेरमुमवतारं तच्चरित्रमन्वहमहरहः कीर्तयेत् तस्य नरस्य सर्वे सङ्कल्पाः मनोरथाः सिध्यन्ति जीवद्दशायामिति शेषः ॥ देहावसाने तु स नरः परमां गतिं मुक्तिं यातीत्यर्थः ॥ ६० ॥

मत्स्यावतारचरित्रकथनान्ते सुखप्रतिपत्तये तदवतारप्रयोजनानि सङ्गृह्य नमस्करोति मुनिः—प्रलयेति । यः प्रलयपयसि प्रलयार्णवजले विहरन्निति शेषः । सुप्ता अप्रबुद्धा शक्तिः सृष्टिशक्तिर्यस्य तस्य निद्राभिभूतत्वादिति भावः । अत एव तस्य धातुः ब्रह्मणो मुखेभ्यः अपनीतं निःसृतं श्रुतिगणं हयग्रीवेणासुरेणापहृतं तं दितिजमसुरं हत्वा प्रत्युपादत्त प्रत्याहृत्य धात्रे ददावित्यर्थः तथा सत्यव्रतानां सत्यव्रतस्य ऋषीणां च छत्रिणो गच्छन्तीतिवल्लिङ्गसमवायात् बहुवचनं ब्रह्म तद्याथात्म्यप्रतिपादकं पुराणमकथयत्समखिलहेतुं सर्वकारणकारणभूतं जिह्ममीनं कपटमीनं हरिमहं नतोऽस्मि नत इति कर्तरि क्तः नमस्कृतवानस्मीत्यर्थः ॥ ६१ ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य सर्वविद्यानिधेः श्रीशैलगुरोः सुतेन तच्चरणकमलपरिचर्याप्रसन्नतत्सूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवात्स्यवीरराघवार्यविदुषा विलिखितायां श्रीमद्भागवतचन्द्रचन्द्रिकाख्यायां श्रीमद्भागवतव्याख्यायामष्टमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥
समाप्तोऽयम् अष्टमस्कन्धः ॥ ८ ॥
श्रीमते रामानुजाय नमः ॥

अस्मिन् स्कन्धे मूलग्रन्थसंख्या ( १०३८ )
टीका सङ्ख्या ( ३६०० ) समग्रसङ्ख्या ( ४६३८ )

---

श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली ।

प्रलयानामपाये अतीते सति ततः उत्थिताय वेधसे ब्रह्मणे प्रत्याहरत् दैत्याहृतांस्तान् ज्ञात्वा प्रत्याहृत्य दत्तवानित्यर्थः ॥ ५७–५९ ॥

सम्वादस्य पापहरत्वे अवतारकथाकीर्तनेन किं प्रयोजनमत्राह—अवतारमिति । अस्तु श्रवणफलं कीर्तनेन किम्फलमित्यतो वाह—अवतारमिति ॥ ६० ॥

बुद्धिसंप्रदायप्रवर्तकस्य सङ्कल्पस्य कथयति—प्रलयेति, सुप्तशक्तेर्विषयपरतोन्द्रियशक्तेः कार्योन्मुखीभूतप्रकृतिशक्तेर्वा अपनीतं निस्सृतं दैत्येन नीतं जिह्ममीनं मायामत्स्यम् ।—

"अनन्तशक्तिर्भगवान्मत्स्यरूपी जनार्दनः ।
क्रीडार्थं याचयामास स्वयं सत्यव्रतं नृपम्" ॥

इत्यनेन तमाह सातिकरुणं महाकारुणिकमित्यादिना विक्रीडितामिति ज्ञातव्यम् ॥ ६१ ॥

पदरत्नावलिनाम अष्टमस्कन्धसङ्गता ।
प्रीत्यै मत्स्यात्मनो विष्णोरस्तु निर्दोषवक्ष्मणः ॥
इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे
श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम्
चतुर्विंशोऽध्यायः ॥ २४ ॥
* विजयध्वजतीर्थपाठरीत्या त्रयोविंशोऽध्यायः ( २३ )
समाप्तोऽयम् अष्टमस्कन्धः ॥ ८ ॥

---

श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः ।

श्रीमत्स्यदेवस्य द्वयेऽवतारं पुनर्दर्शयति—अतीतेति । द्वाभ्याम् ॥ ५७ ॥

षष्ठे मन्वन्तरे विष्णोः प्रसादं लब्ध्वा सप्तमे वैवस्वतो मनुरासीदित्यर्थः ॥ ५८ ॥

माया कृपा ॥ ५९—६० ॥

जिह्मेषु कुटिलहृदयेषु सामान्यमीनतया प्रकाशमानं नाहं प्रकाशः सर्वस्येत्यादेः विराडविदुषामित्यादेश्च ॥ ६१ ॥
इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भस्य
चतुर्विंशोऽध्यायः समाप्तः ॥ २४ ॥
समाप्तोऽयम् अष्टमस्कन्धः ॥ ८ ॥

---

श्रीमद्विश्वनाथचक्रवर्तिकृतसारार्थदर्शिनी ।

मत्स्यावतारद्वयस्य समयद्वयं प्रयोजनद्वयं चाह—अतीतप्रलयस्य अपाये स्वायम्भुवमन्वन्तरारम्भे इत्यर्थः ॥ ५७ ॥

तु भिन्नोपक्रमे सत्यव्रतस्तु चाक्षुषमन्वन्तरमध्य इति शेषो बोध्यः चाक्षुषोदधिसम्प्लवे अपाठेवस्वतं मनुमिति वाक्यानुरोधात् विष्णोर्मत्स्यरूपस्य प्रसादात् ज्ञानविज्ञानसंयुत इति चाक्षुषीयमत्स्यावतारस्य प्रयोजनमुक्तम् ॥ ५८—६० ॥

समासेन प्रयोजनद्वयं पुनः स्पष्टमाह—प्रलये दितिजं हत्वा सत्यव्रतानामिति गौरवेण बहुवचनं जिह्ममीनं कुटिलाकारं मीनं यस्य शृङ्गे नौर्निबद्धा स तु मीनः कुटिलाकार आडिम्बः प्रसिद्ध एव लोके इति सद्योक्तम् ॥ ६१ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् ।
चतुर्विंशोऽष्टमस्कन्धे सङ्गतः सङ्गतः सताम् ॥ २४ ॥
समाप्तोऽयम् अष्टमस्कन्धः ॥ ८ ॥

श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः ।

अतीतप्रलयस्यापाये समाप्तौ ॥ ५७ ॥ ५८ ॥

मायया आत्मकाविषयिण्या कृपया आविर्भूतो यो मत्स्य-रूपस्य ॥ ५९ ॥

योऽयमवतारस्तमन्वहं प्रतिदिनं यः कीर्तयेत् ॥ ६० ॥

सत्यव्रतानां सत्यव्रतसहितानामृषीणां छन्दांसि यान्तीति मकृदस्तु वचनम् जिघ्रौ दैत्यवधार्थं गूढरूपो विष्णुः स चासौ मीनश्च तम् ॥ ६१ ॥

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धीये
श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे ।
चतुर्विंशोऽध्यायार्थप्रकाशः ॥ २३ ॥
समाप्तोऽयमष्टमस्कन्धः ॥ ८ ॥

---

भाषा टीका ।

पूर्व प्रलय के व्यतीत होने के अंत में वेद के चुराने वाले हय-ग्रीव असुर का वध करके सोके उठे हुये ब्रह्माजी को श्रीहरि ने वेद लाकर दिये ॥ ५७ ॥

ज्ञान विज्ञान संयुत वही सत्यव्रत राजा इस कल्प में श्री-विष्णु के प्रसाद से वैवस्वत मनु हुए ॥ ५८ ॥

सत्यव्रत राजर्षि और कृपा से मीन रूपधारी श्री मुरारी का यह संवाद रूप आख्यान जो श्रवण करे वह किल्बिष से मुक्त होय ॥ ५९ ॥

जो मनुष्य श्रीहरि के इस अवतार का प्रति दिन कीर्तन करे उसके सम्पूर्ण संकल्प सिद्ध होते हैं और वह परमगति को प्राप्त होता है ॥ ६० ॥

प्रलय जल में सोये हुए ब्रह्माजी के मुखों से वेदों को जिस दैत्यने चुराये उसको मारकर, जिनने ऋषि लोग और सत्य व्रत राजा को ब्रह्म ज्ञान का उपदेश दिया ऐसे कृपा से मीन रूपधारी श्रीहरी को मैं नमस्कार करता हूं ॥ ६१ ॥

क्षय जल बिच धाता सो रहे—के मुखों से ।
श्रुति गण हरते ही दैत्य को मारके जो ॥
दिये वह, कहदीना ज्ञान सत्यव्रतों को ।
अखिल निमित मायी मीन को वन्दता हूं ॥
श्रीमद्भागवतेऽयं रुचिरकथो ह्यष्टमस्कन्धः ॥

भागवतार्य विनिर्मितभाषाटीकासमन्वितो जयति ॥
इति श्रीमद्भागवत अष्टम स्कन्ध में, चतुर्विंशोऽध्याय
की श्रीवृन्दावनस्थ, श्रीसुदर्शनाचार्यान्तेवासि,
श्रीबलराम स्वामि चरणाश्रित भागवताचार्य कृत
भाषा टीका समाप्त ॥ २४ ॥ अष्टमस्कन्धभी समाप्त हुआ ॥ ८ ॥
श्रीरुक्मिणीरमणो जयति ॥

---

इति श्रीमद्भागवते महापुराणे अष्टमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

समाप्तोऽयमष्टमस्कन्धः ॥

---

संशोधकौ चास्य ग्रन्थरत्नस्य काञ्चीमण्डलान्तर्वर्ति 'काम्बूर' श्रीरङ्गाचार्य—'श्रीवृन्दावनस्थ' भागवताचार्यौ ॥